॥ श्रीः ॥

॥ श्री...

...-

विष्णुद्वेषकर-

# महाशैवमतमर्दनम्

महामहोपाध्यायबिरुदाङ्कितैः

**श्री-रामसुब्रह्मण्यशास्त्रिभिः**

प्रणीतम्

कुम्भघोणप्रान्तगतमेलग्रामाभिजनैः

श्रीमत्-पिच्चु-अय्यर्-आख्य-प्रभुभिः

तञ्जानगरस्थ-

श्रीकृष्णविलासमुद्रालये

प्रकाशितम्

१९१२.

मूल्यम् —— ८ आणकाः

॥ श्रीः ॥

विष्णुद्वेषकर-

# महाशैवमतमर्दनम्


महामहोपाध्यायबिरुदाङ्कितैः

श्री-रामसुब्रह्मण्यशास्त्रिभिः

प्रणीतम्



कुम्भघोणप्रान्तगतमेल्प्पल्लग्रामाभिजनैः

श्रीमत्-पिच्चु-अय्यर्-आख्य-प्रभुभिः

तञ्जानगरस्थ-

श्रीकृष्णविलासमुद्रालये

प्रकाशितम्

१९१२.

मूल्यम् —— ८ आणकाः

॥ श्रीः ॥

# ॥ विष्णुद्वेषकरमहाशैवमतमर्दनम् ॥

द्राविडहरदत्ताद्यैः शैवैः शास्त्रार्थविप्लवो जनितः ।
तमहं दूरीकर्तुं करोमि रामस्य पादयोर्नमनम् ॥ १ ॥

नास्माकं शिवतत्त्वे द्वेषः कश्चित्प्रसिद्धमनुसिद्धे ।
हरितत्त्वे द्वेषमतिर्येषां तन्मर्दनोऽयमारम्भः ॥ २ ॥

यद्यप्यद्वैतमेव श्रुतिशतगदितं ब्रह्म तत्स्याच्छिवो वा
विष्णुर्वा नात्र काचित्क्षतिरपि गदितुं शक्यते मादृशैश्च ।
केचिद्दुर्वादनिष्ठा हरिपरभवनं शास्त्रसंघे न चास्ती-
त्येवं ग्रन्थं लिखित्वा कुगतिमुपगतास्तन्मतं खण्ड्यतेऽत्र ॥ ३ ॥

वेदान्ते भारतादौ हरिहरविषये वाक्यबृन्दैर्निषिद्धा
बुद्धिर्भेदावलम्बा कथमिह घटते भेदवादः कथंचित् ।
एतस्मिन्नेवमैक्ये बहुभिरिह जनैर्विष्णुतो रुद्रदेवे
ह्याधिक्यं साध्यतेऽतः किमपि विलिखितं द्वेषबुद्ध्या न रुद्रे ॥ ४ ॥

वैतण्डिकरीतिं तामवलम्ब्यास्मिन्प्रवृत्तोऽस्मि ।
न हि मे शिवपरभावे बुद्धिर्नास्तीति शङ्कनं न्याय्यम् ॥ ५ ॥

हरिहरतत्त्वविवेके हरिवंशे नारदेन संप्रोक्ते ।
तत्त्वमतिर्जाता चेद्विशेष्यं तत्र कः कुर्यात् ॥ ६ ॥

वेदगतकर्मकाण्डार्थनिर्णयार्थं प्रवृत्तायां जैमिनीयषोडशलक्षणधर्ममीमांसायां वेदगतसपरिकरब्रह्मस्वरूपप्रतिपादकज्ञानकाण्डार्थनिर्णयार्थं प्रवृत्तायां शारीरकसंज्ञायां वैयासिक्यां चतुर्लक्षणब्रह्ममीमांसायां च श्रुत्यर्थनिर्णायकोपबृंहणलेखनप्रकरणे 'स्मृतेश्च' 'स्मर्यते च' 'स्मरन्ति च' 'प्रमाणमनुमानं स्यात्' इति सूत्रैः स्मृतेर्वेदोपबृंहणतया लेखनवत् 'पुराणाच्च' इति सूत्रं कृत्वा पुराणस्य वेदोपबृंहणत्वालेखनान्मीमांसाशास्त्रद्वयरीत्या पुराणं वेदगतकर्मकाण्डज्ञानकाण्डोपबृंहणविषयेऽनादरणीयमिति स्पष्टम् । 'एतेन शिष्टापरिग्रहा व्याख्याताः' 'अपरिग्रहाच्चात्यन्तमनपेक्षा' इति शारीरकद्वितीयाध्यायप्रथमद्वितीयपादीयसूत्रोक्तन्यायरीत्या मीमांसाशास्त्रद्वयकर्तृशिष्टाग्रगण्यजैमिनिबादरायणाभ्यां वेदोपबृंहणविषयेऽपरिगृहीतत्वात्तद्विषये पुराणं शिष्टानामनादरणीयमेव । अत एव 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इत्यत्र वेदोपबृंहणांशे पुराणस्याभासत्वद्योतनार्थं द्वन्द्वसमासेऽल्पाच्कं पुराणपदमनिपात्य बह्वच्कमितिहासपदम् 'अभ्यर्हितं पूर्वम्' इति वार्त्तिकरीत्या पूर्वं निवेशितं पश्चाच्च पुराणपदम् । 'यद्विना धर्मशास्त्रेण प्रायश्चित्तं विधीयते । न तेन शुद्धिमाप्नोति प्रायश्चित्ते कृतेऽपि सः' इति माधवीयधृतेन शातातपवचनेन, 'धर्मशास्त्ररथारूढा वेदखड्गधरा द्विजाः । क्रीडार्थमपि यद्ब्रूयुः स धर्मो नेतरः स्मृतः' इति पराशरस्मृतिवचनेन च पापनिवर्तकधर्मांश इव वेदोपबृंहणांश इव च तदितरसर्वांशस्याप्रामाण्याभावेऽपि तदंशे पुराणमविश्वसनीयमेव । अन्यथा च्छान्दोग्यमधुविद्यायाम् 'इतिहासपुराणं पुष्पम्' इत्यत्र द्वन्द्वसमासे पुराणस्यानभ्यर्हितपुष्पत्वापरपर्यायदुर्गन्धपुष्पत्वद्योतनार्थं पुराणपदस्य परनिपात इतिहासपदस्य पूर्वनिपातश्च कथं कृतः संगच्छते । अन्यथा 'अल्पाच्तरम्' इति शास्त्ररीत्या पुराणपदमेव पूर्वनिविष्टं स्यात् । न हि तथा दृश्यते । किं च, अष्टोत्तरशतोपनिषदां वेदत्वस्वीकारेऽपि उपनिषदां मध्ये ईशकेनकठप्रश्नमुण्डमाण्डूक्यतैत्तिरीयैतरेयच्छान्दोग्यबृहदारण्यकसंज्ञिकानां दशोपनिषदां वेदगतज्ञानकाण्डान्तर्भावः, न तु श्वेताश्वतरकैवल्याथर्वशिखाथर्वशिरःप्रभृत्युपनिषदाम् । वेदगतकर्मकाण्डानन्त-

र्भावस्तु स्पष्ट एव । न तत्र प्रमाणं वक्तव्यम् । मुक्तिकोपनिषद्याञ्जनेयं प्रति 'माण्डूक्यमेकमेवालं मुमुक्षूणां विमुक्तये । तथाप्यलब्धं चेज्ज्ञानं दशोपनिषदं पठ । ज्ञानं लब्ध्वाचिरादेव मामकं धाम यास्यसि ॥ तथापि दृढता नो चेद्विज्ञानस्याञ्जनासुत । द्वात्रिंशाख्योपनिषदं समभ्यस्य निवर्तय' इति श्रीरामवाक्यानि दृश्यन्ते । तैश्च दशोपनिषदां ब्रह्मज्ञानार्थत्वम्, दशोपनिषज्जनितब्रह्मज्ञानस्य दार्ढ्याभावे द्वात्रिंशत्संज्ञकोपनिषदो दशोपनिषज्जन्यज्ञानदार्ढ्यार्थत्वम्, अन्यासामुपनिषदां ब्रह्मज्ञानतद्दार्ढ्यकामनावद्भिः परित्याज्यत्वं चोक्तम् । तेन दशोपनिषदामेव वेदगतज्ञानकाण्डत्वं प्रतीयते, श्वेताश्वतराद्यानां दशोपनिषदुत्तरभाविनीनां ज्ञानकाण्डत्वाभावश्च । अत्र द्वात्रिंशाख्योपनिषदमित्यत्र द्वात्रिंशाख्योपनिषत्पदस्य द्वात्रिंशत्संख्याका उपनिषदो नार्थकोटिप्रविष्टाः; तथात्वे दशोपनिषदं पठेत्यत्रेव द्वात्रिंशोपनिषदं समभ्यस्येत्येव निर्देशापत्तेः, आख्यापदवैयर्थ्यापत्तेश्च । अतः 'द्वात्रिंशदित्याख्या संज्ञा यस्याः सा द्वात्रिंशाख्या, सा चोपनिषद्द्वात्रिंशाख्योपनिषत्' इति समासरीत्या द्वात्रिंशत्संज्ञिका काचिदुपनिषदस्ति ब्रह्मज्ञानदार्ढ्यापादिकेत्युक्तं भवति । ज्ञानकाण्ड एव ब्रह्मकाण्डः । उपरितनश्वेताश्वतराद्युपनिषदां तत्तद्भाष्यकारैर्ब्रह्मप्रकरणे लेखनं तु प्रौढिवादमात्रेण पुराणानामुपबृंहणत्वेन लेखनवदवगन्तव्यम् । तत्रापि श्वेताश्वतरोपनिषदध्ययनश्रवणतदर्थविचारणादौ कैवल्योपनिषदध्ययनश्रवणतदर्थविचारणादौ चाश्रमत्राह्यस्यैवाधिकारः; न त्वाश्रमप्रविष्टानां ब्रह्मचारिगृहस्थवानप्रस्थसंन्यासिनाम्, श्वेताश्वतरोपनिषद्गतषष्ठाध्यायीय— 'अत्याश्रमिभ्यः परमं

---

१. गीतोपनिषत् । गीतोपनिषदि द्वात्रिंशत्समाख्याप्रवृत्तिनिमित्तानां द्वात्रिंशत्तत्त्वानां सत्त्वं प्राधान्येन दृश्यते । तथैव 'भूमिरापः' इत्याद्युक्ताष्टविधजडप्रकृतीनां चित्प्रकृतेः तादृशप्रकृतिद्वयाश्रयभगवतः 'इन्द्रियाणां मनः' इत्युक्तैकादशेन्द्रियाणाम् 'चातुर्वर्ण्यं मया' इत्युक्तवर्णचतुष्टयस्य 'शमो दमस्तथा शौचम्' इत्युक्तचतुर्वर्णस्वाभाविकधर्मचतुष्टयस्य 'सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः' इत्युक्तगुणत्रयस्य च प्राधान्येन प्रतिपादनात् ।

पवित्रं प्रोवाच सम्यगृषिसंघजुष्टम्' इति, कैवल्योपनिषद्गतद्वितीयखण्डीय-'अत्याश्रमी सर्वदा सकृद्वा जपेत् । अनेन ज्ञानमाप्नोति संसारार्णव-नाशनम्' इति च वाक्यप्रामाण्यादित्यलम् । एतेन पुराणमपि स्मृतिरिति कैश्चिदुक्तमपास्तम् । 'श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते । तत्र श्रुतिर्बलिष्ठा स्याद्द्वयोर्मध्ये स्मृतिर्वरा ॥ श्रुतिस्मृतिपुराणेषु विरुद्धेषु परस्परम् । पूर्वं पूर्वं बलीयः स्यादिति वेदविदो विदुः' इति व्यासस्मृतिवचनविरोधापत्तेः । एतेन इतिहास-पुराणानामेकत्वमिति कैश्चिदुक्तमपास्तम्; 'इतिहासपुराणं पुष्पम्' 'इतिहास-पुराणाभ्यां वेदं समुपबृंहयेत्' इति श्रुतिस्मृत्योरितिहासपुराणयोर्भेदव्याप्तद्वन्द्वस-मासनिर्देशानुपपत्तेः । विशिष्टाद्वैतभाष्ये पुराणवचनस्य क्वचित्क्वचित्स्मृतिकोटौ गणनं पुराणस्य स्मृतित्वं कृत्वा चिन्तया । अन्यथा तद्भाष्ये 'तदुपर्यपि बाद-रायणः संभवात्' इतिसूत्रीये 'संकीर्णब्राह्मणमन्त्रार्थवादमूलेषु धर्मशास्त्रेतिहास-पुराणेषु' इति ग्रन्थे विधिवाक्यात्मकवेदगतब्राह्मणमूलकधर्मशास्त्रशब्दितस्मृत्य-पेक्षया वेदगतमन्त्रमूलकेतिहासापेक्षया च पृथक्त्वेनार्थवादमूलकत्वेन पुराणस्य कथनानुपपत्तेः । धर्मशास्त्रस्य स्मृतित्वं च 'श्रुतिस्तु वेदो विज्ञेयो धर्म-शास्त्रं तु वै स्मृतिः' इति मनुस्मृतिवचनसिद्धम् । पुराणे स्वार्थतात्पर्य-रहितार्थवादमूलकत्वोक्त्या वेदोपबृंहणांशेऽनभ्यर्हितत्वं च तद्भाष्यकाराभिमत-मिति स्पष्टमवगम्यते । एवमेवाद्वैतभाष्यकृतामभिप्रायः; तदीयाद्वैतभाष्ये 'भावं तु बादरायणोऽस्ति हि' इतिसूत्रीयेण 'मन्त्रार्थवादमूलकमितिहासपुराणमपि देवताविग्रहादि प्रपञ्चयितुमलम्' इति ग्रन्थेन पुराणस्यार्थवादमूलकत्वोक्तेः । स्तुत्यपरपर्यायस्यार्थवादस्य स्वार्थतात्पर्याभावः 'स्तुतयेऽनुमतिर्वा' इतिसूत्राद्वैत-विशिष्टाद्वैतभाष्ययोः स्पष्टः । श्वेताश्वतरोपनिषद्व्याख्यानामद्वैतविशिष्टाद्वैतभाष्य-योर्ग्रहणमपि तद्व्याख्यानां ज्ञानकाण्डवेदरूपत्वं कृत्वा चिन्तया, न तु मुख्यतो ज्ञानकाण्डत्वमस्तीति । कृत्वाचिन्तयापि ग्रहणाग्रहणे अद्वैतिविशिष्टाद्वैतिभाष्य-कृदभिमते एव; 'विधिर्वा धारणवत्' इति सूत्रे भाष्यद्वयेऽपि 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्' इति वाक्यस्याभावं कृत्वा चिन्तया 'विधिर्वा धारणवत्'

इतिसूत्रप्रवृत्तिरित्यर्थस्य कथनादित्यलम् । इदं तु बोध्यम्— याज्ञवल्क्य-स्मृतिरीत्यापि ईशादिदशोपनिषदामेव वेदत्वम्, ऋग्वेदादिगतकर्मकाण्डवद्धर्म-विद्यास्थानत्वं च; न तु दशोपनिषद्भिन्नोपनिषदाम्, 'पुराणन्यायमीमांसाधर्म-शास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश' इति याज्ञवल्क्यस्मृतिप्रथमाध्यायवचनप्रामाण्यात् । न ह्यस्मिन्वचने वेदगतमिश्रण-प्रतियोगिपुराणादिदशकं वेदचतुष्टयं च मिश्रीकृत्य चतुर्दशत्वं तेषु धर्मस्थानत्वं विद्यास्थानत्वं चोक्तमिति शङ्क्यम्; मिश्रणप्रतियोगिनमादाय मिश्रणानुयोगि-पदसमानाधिकरणचतुर्दशपदोक्तचतुर्दशत्वसंपादने तत्समानाधिकरणस्थानपदोक्त-स्थानत्वस्य तत्र संपादने देवदत्तयज्ञदत्तमिश्रितमेकविष्णुमित्रं गृहीत्वा देवदत्त-यज्ञदत्तमिश्रिता विष्णुमित्रास्त्रयः पण्डिताः शिष्टा इति देवदत्तमिश्रितो यज्ञ-दत्तो द्वावित्यादिनिर्देशस्यापि प्रामाणिकत्वापत्तेः । न ह्यनुयोगिपदसमानाधि-करणपदोक्तधर्माणामनुयोगिविशेषणमिश्रितविशेषणमिश्रणविशेषणेषु शाब्दान्वयः कुत्रापि दृश्यते । तस्माच्चत्वारि कर्मकाण्डानि दशोपनिषदश्च मिलित्वा चतुर्दशसंख्याका वेदाः ।

मुक्तिदातृत्वं विष्णोरेव, न तु विधिशिवादीनाम्; 'वेदाहमेतं पुरुषं महा-न्तमादित्यवर्णं तमसः परस्तात् । तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय' इति सर्वसंप्रतिपन्नपठ्यमानपुरुषसूक्तश्रुतौ मोक्षहेतुज्ञानविषयत्वस्य महापुरुषशब्दितनारायणे कथनात् 'नान्यः पन्थाः' इत्यत्र सिद्धोपायान्तर-निषेधपरत्वे मोक्षहेतुज्ञानविषयमहापुरुषान्यस्य मोक्षोपायत्वप्रतिषेधाच्च । अतो विष्णुरेव मोक्षहेतुज्ञानविषयो मोक्षोपायश्चेति सिद्धम् । अस्यां श्रुतौ इहशब्द-निर्देशाद्विष्णुनिष्ठस्यास्मिन्नेव जन्मनि मोक्षः न त्वन्यनिष्ठस्येति सिध्यति । एतेन ज्ञानकाण्डबहिर्भूतश्वेताश्वतरोपनिषदि 'यो देवानां प्रभवश्चोद्भवश्च विश्वाधिपो रुद्रो महर्षिर्हिरण्यगर्भं जनयामास पूर्वं स नो बुद्ध्या शुभया संयुनक्तु' 'विश्व-स्यैकं परिवेष्टितारमीशं तं ज्ञात्वा अमृता भवन्ति' 'तमेवं विदित्वाति मृत्यु-

मेति नान्यः पन्था विद्यतेऽयनाय' 'य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःख-
मेवापियन्ति' 'रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यम्' इत्यादिभिर्वचनैः
'उमासहायम्' इत्युपक्रम्य प्रवृत्तेन कैवल्योपनिषद्वचनेन शिवस्य मोक्षहेतुज्ञानवि-
षयत्वं मोक्षदातृत्वं च कथितमित्युक्तमपास्तम्; त्वदुदाहृतवचनेषु शिवस्य मोक्षहे-
तुज्ञानविषयकत्वकथनेऽपि इहेतिपदाभावेन पुरुषसूक्तोक्तमोक्षहेतुज्ञानविषयविष्णावे-
तज्जन्मनि मोक्षदातृत्ववच्छिवस्य तदसिद्ध्या प्रत्युत इहपदघटितपुरुषसूक्तश्रुत्या
शिवादीनामेतजन्मनि मोक्षदातृत्वप्रतिषेधाच्च जन्मान्तरे मोक्षहेतुविष्णुज्ञानजननद्वारा
शिवज्ञानस्य मोक्षहेतुत्वसिद्ध्या साक्षाच्छिवज्ञानस्य मोक्षहेतुत्वासिद्ध्या अग्नि-
होत्रादिकर्मणामिव मोक्षप्रयोजकत्व एव विश्रान्त्या शिवस्य मोक्षदातृत्वासिद्धेः।
यदि च परम्परया मोक्षहेतोरपि तद्दातृत्वमभिमतं तदा 'तमेतं वेदानुवचनेन
ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' इति श्रुत्या ब्रह्मज्ञानद्वारा
मोक्षहेतुतया प्रतिपादितयज्ञादीनां मोक्षप्रदत्वं कुतो न भवेत्। साक्षान्मोक्ष-
हेतुत्वस्य यज्ञादिष्वसंभवेन मोक्षदातृत्वास्वीकारे शिवतज्ज्ञानयोरपि तत्तुल्यम्।
शिवतज्ज्ञानयोर्मोक्षोपायत्वस्वीकारे 'तमेवं विद्वानमृत इह भवति नान्यः पन्था
विद्यतेऽयनाय' इति श्रुतिविरोधो दुष्परिहरः। अत एव 'शंकराज्ज्ञान-
मन्विच्छेन्मोक्षमिच्छेज्जनार्दनात्' इति मुनिवचनेन निहीनार्थककर्मप्रवचनीया-
नुशब्दबोधितनिहीनत्वं परम्परया मोक्षहेतुत्वपर्यवसितं शंकरज्ञाने कथितम्;
निहीनं ज्ञानं शंकरादिच्छेदित्यर्थः। अन्यथा शंकरज्ञानादेव मोक्षसिद्धौ 'मोक्ष-
मिच्छेज्जनार्दनात्' इत्यस्य पदसंदर्भरूपवाक्यस्यैवाप्रामाण्यापत्तेः। वरं हि
वाक्यवैयर्थ्यपरिहारार्थं पदस्य गौणार्थवर्णनमपीति पूर्वतन्त्रे दशमाध्याये
'यद्यपि चतुरवत्ती यजमानस्तथापि पञ्चावत्तैव वपा कार्या' इत्यत्र शाबर-
भाष्यशास्त्रदीपिकादौ न्यायः प्रदर्शितः। किमु वक्तव्यम् 'मोक्षमिच्छेज्जनार्द-
नात्' इतिवाक्यवैयर्थ्यपरिहारार्थं कर्मप्रवचनीयस्यानोर्निहीनत्वरूपमुख्यार्थमाश्रि-
त्यानोरुपपत्तिकल्पने। 'विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय'
इति श्रुतेः 'शंकराज्ज्ञानमन्विच्छेत्' इत्युक्तज्ञाने साक्षान्मोक्षहेतुत्वस्वीकारे

विरोधप्रसङ्गाच्च। अत एव पञ्चमवेदान्तर्गतहरिवंशपर्वणि कैलासयात्रायां देवानृषींश्च प्रति श्रीकृष्णसंनिधौ— 'यूयं मां तत्त्वतो ध्यात्वा ततो जानीत केशवम्। उपास्योऽयं हरिर्विप्रा उपायोऽस्मि हरेः स्मृतौ' इति शिवेनैव मोक्षहेतुविष्णुज्ञानहेतुत्वं स्वध्यानस्योक्तं संगच्छते। शिवज्ञानस्य साक्षान्मोक्षहेतुत्वे उक्तशिववचनं विरुध्येत। अत एव हरिवंशे तत्रैव श्रीकृष्णसंनिधौ 'मुक्तिं प्रार्थयमानं मामेवमाह त्रिलोचनः। मुक्तिप्रदाता सर्वेषां विष्णुरेव न संशयः' इति शिवोक्तं वचनं घण्टाकर्णेनानूदितम्। शिवस्यापि साक्षान्मोक्षहेतुत्वे तदपि वचनं विरुध्येत। 'अत्रोपनिषदं पुण्यां कृष्णद्वैपायनोऽब्रवीत्' इत्यादिपर्ववचनरीत्या महाभारतसारभूतायां भगवद्गीतोपनिषदि 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इत्येवकारघटितश्लोकेन श्रीकृष्णप्रपन्नस्यैव मायातरणाख्यो मोक्षः न तु विधिशिवादिप्रपन्नस्येति स्पष्टमेवोक्तं प्रतीयते। तच्छ्लोकीयेन 'कथं पुनर्दैवीमेतां त्रिगुणात्मिकां मायामतिक्रामन्तीति; उच्यते— दैवी देवस्य ममेश्वरस्य विष्णोः स्वभावभूता हि यस्मात् यथोक्ता गुणमयी मम माया दुरत्यया दुःखेन अत्ययोऽतिक्रमणं यस्याः सा दुरत्यया। तत्रैवं सति सर्वधर्मान्परित्यज्य मामेव मायाविनं स्वात्मभूतं सर्वात्मना ये प्रपद्यन्ते, ते मायामेतां सर्वभूतचित्तमोहिनीं तरन्ति अतिक्रामन्ति, संसारबन्धान्मुच्यन्त इत्यर्थः' इति श्रीमच्छंकरभगवत्पादभाष्येण मामेवेत्येवकारसंघटनाद्भगवद्व्यतिरिक्तविधिशिवादिदेवतान्तरप्रपदनं न मायातरणाय भवतीति स्पष्टमेवोक्तम्। 'न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः। माययापहृतज्ञाना आसुरं भावमाश्रिताः' इत्यनन्तरश्लोकीये 'यदि त्वां प्रपन्ना मायामेतां तरन्ति तर्हि कस्मात्त्वामेव सर्वे न प्रपद्यन्त इति; उच्यते— न मामिति। मां परमेश्वरं दुष्कृतिनः पापकारिणः मूढा न प्रपद्यन्ते। नराणां मध्ये अधमा निकृष्टाः ते च माययापहृतज्ञानाः आसुरं भावं हिंसानृतादिलक्षणमाश्रिताः' इति श्रीमच्छंकरभगवत्पादभाष्ये 'कस्मात्त्वामेव सर्वे न प्रपद्यन्ते' इत्यंशेन एवकारघटनाद्देवतान्तरसंबन्धं विना भगवत्प्रपदनमेव मोक्षहेतुभूतं सर्वैः कुतो न क्रियत इति चोद्य-

मुत्थाप्य भगवद्व्यतिरिक्तदेवतान्तरसंबन्धे मोक्षविरोधि पापमेव निमित्तमिति च स्पष्टमुक्तम् । 'प्रशान्तात्मा विगतभीः' इति गीताश्लोकीयशंकरभगवत्पादभाष्ये 'कश्चिद्रागी स्त्रीचित्तः न तु स्त्रियमेव परत्वेन गृह्णाति, किं तु राजानं महादेवं वा । अयं तु मच्चित्तो मत्परश्च' इत्यनेन कामुकस्त्रीचित्तपुरुषगृहीत-परत्वकत्वं महादेवस्य, न तु भगवन्निष्ठपुरुषगृहीतपरत्वकत्वमिति कथनेन महा-देवस्य कामुकपुरुषमात्रभजनीयत्वं न तु मुमुक्षुभजनीयत्वमिति सिद्धम् । तथा च उदाहृत— 'तमेवं विद्वान्' इतिश्रुतिहरिवंशवचनभगवद्गीताश्लोकतदीयशंकर-भगवत्पादभाष्यैः मुमुक्षूपास्यो विष्णुरेव न विधिशिवादिरिति स्पष्टमेव प्रति-पादितम् ! न ह्येवं महाभारते भगवत्पादभाष्येषु वा शिवस्य मुमुक्षूपास्यत्व-समर्पकं वाक्यं दृश्यते । एतेन केनचिद्गौडमुण्डिना यानि शिवपूजापराणि महा-भारतवचनानि लिखितानि, तानि सर्वाण्यप्यनुक्तोपालम्भनत्वात्परास्तानि । न हि तेषु वचनेषु मुमुक्षुणा मोक्षार्थं शिवाराधनं कर्तव्यम्, अनेन मोक्षार्थं शिव आराधित इति वा कथितमस्ति । प्रत्युत पापक्षयार्थाश्वमेधराजसूयादिजन्य-फलसमानफलार्थमेव शिवपूजनादिकं प्रतिपादितमस्ति । मोक्षव्यतिरिक्तफला-पेक्षिणा अमुमुक्षुणा तत्तत्फलार्थं शिवाराधनं कार्यमेव । तत्तु न प्रतिषिध्यते । एतेन 'त्रियम्बकं यजामहे' इति मन्त्रे शिवोद्देश्यकयजने मोक्षहेतुत्वमस्तीति लिखितमपास्तम् । शिवपूजादिरूपशिवयजनस्य कर्मकोटिप्रविष्टस्य ब्रह्मज्ञान-भिन्नत्वेन मोक्षहेतुत्वासिद्धेः; अन्यथा 'नान्यः पन्था अयनाय विद्यते' इति श्रुतिविरोधापत्तेः । श्रीशंकराचार्यश्रीरामानुजाचार्यश्रीमध्वाचार्यप्रभृतिभिर्भाष्य-कारैर्ज्ञानव्यतिरिक्तस्य मोक्षहेतुत्वानङ्गीकारात् 'तमेतं वेदानुवचनेन' इत्यादिश्रुत्या वेदानुवचनयज्ञादीनां ज्ञानद्वारा मोक्षप्रयोजकत्वेन निर्देशवत्तत्कोटिप्रविष्टस्य शिवयजनस्यापि ज्ञानद्वारा परम्परया मोक्षप्रयोजकत्वमेव 'त्रियम्बकं यजामहे' इति श्रुत्या प्रतिपादितमिति स्वीकर्तव्यम् । एतेन 'जन्मकर्मतपोयोगास्तयोस्तव च पुष्कलाः । ताभ्यां लिङ्गेऽर्चितो देवस्त्वयार्चायां युगे युगे' इति द्रोण-पर्वण्यश्वत्थामानं प्रति व्यासवचनेन 'अत्र पूर्वं महादेवः प्रसादमकरो-

त्प्रभुः' इति श्रीमद्रामायणवचने च श्रीरामकृष्णयोः शिवाराधकत्वोक्त्या शिव-
स्योत्कर्षः प्रतीयत इत्युक्तमपास्तम्; 'न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किं-
चन । नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि' इति भगवद्गीतावचनेन 'अह-
मात्मा हि भूतानां विश्वेषां पाण्डुनन्दन । तस्मादात्मानमेवाग्रे रुद्रं संपूजया-
म्यहम् ॥ यद्यहं नार्चयेयं वै ईशानं वरदं शिवम् । आत्मानं नार्चयेत्कश्चिदिति
मे भाषितं मनः ॥ मया प्रमाणं हि कृतं लोकस्तदनुवर्तते । प्रमाणानीह
पूज्यानि ततस्तं पूजयाम्यहम् ॥ न हि मे केनचिद्देयो वरः पाण्डवनन्दन' इति
शान्तिपर्वमोक्षधर्मनारायणीयगतश्रीकृष्णवचनैः— स्वेन शिवपूजनाद्यकरणे
शिवस्यान्यैः पूज्यत्वं न सिध्येत्; अतः शिवस्यान्यपूज्यत्वसिद्ध्यर्थं भगवता
शिवपूजनाख्यं प्रमाणं कृतं न तु स्वार्थम्; न हि भगवतः कर्तव्यं किंचिदस्ति;
यत्क्रियते कर्म तल्लोकसंग्रहार्थमेव कृतम्— इत्यवगमेन भगवत्कृतशिवपूजातद्वरग्र-
हणादेर्विडम्बनमात्रतया तेन शिवोत्कर्षासिद्धेः । हि यस्मादहं कृष्णः सर्वप्राणि-
नामात्मा तस्मादात्मानमेवाग्रे पूजयामीत्यन्वयबलेन सर्वप्राण्यन्तर्यामिणः श्रीकृष्ण-
भगवद्रूपस्यात्मनः श्रीकृष्णकृतपूजनकर्मत्वं प्रतीयते, हिशब्दतस्मादितिशब्दो-
क्तपूजाप्रयोजकहेतुत्वस्याहंशब्दिते कृष्ण एव विश्रान्तेः । आत्मानमित्यस्य
विशेषणं रुद्रमिति रुद्रविभूतिकमात्मानमिति लभ्यते । एवकारेण श्रीकृष्णात्मव्यति-
रिक्तस्य तद्विभूतिरुद्रस्य स्वातन्त्र्येण पूजाकर्मत्वं व्यवच्छिद्यते । आत्मविशेषणतया
सिद्धं शिवस्य भगवत्पूजनकर्मत्वमनुवदति 'यद्यहम्' इति श्लोकः । एत-
मेव भगवदभिप्रायमुद्योगपर्वणि— 'ईशन्नपि महायोगी सर्वस्य जागतो हरिः ।
कर्माण्यारभते कर्तुं कीनाश इव दुर्बलः ॥ तेन वञ्चयते लोकान्मायायोगेन केशवः ।
एतमेव प्रपद्यन्ते न ते मुह्यन्ति मानवाः' इति धृतराष्ट्रं प्रति व्यासप्रसादलब्धदि-
व्यदृष्टिः संजयोऽप्यकथयत् । 'तेन वञ्चयते लोकान्' इति शिवपूजादि-
कृष्णकर्मणो विडम्बनमात्रत्वं संजयः समसूचयत् । महाभारतान्ते भगवाञ्श्रीवेद-
व्यासः 'कीर्तिं प्रथयता तेन पाण्डवानां महात्मनाम् । क्रीडां च वासुदेवस्य
देवदेवस्य चक्रिणः' इत्यादिना भगवत्कर्मणः सर्वस्यापि क्रीडारूपत्वमवोचत् ।

न ह्येवं महाभारते 'सब्रह्मकाः सरुद्राश्च सेन्द्राः सर्वे महर्षयः। अर्चयन्ति सुरश्रेष्ठं देवं नारायणं प्रभुम्' इति नारायणीयवचनेन, 'पादेन कमलाभेन ब्रह्मरुद्रार्चितेन च। पस्पर्श पुण्डरीकाक्षो ह्यापादतलमस्तकम्' इत्याश्वमेधिकवचनेन, 'महादेवः सर्वमेधे हुत्वात्मानं देवदेवो बभूव। विश्वाल्लोकान्व्याप्य विष्टभ्य कीर्त्या विराजते द्युतिमान्कृत्तिवासाः' इति राजधर्मवचनेन च शिवकृतभगवदाराधनस्य विडम्बनत्वबोधकं किमपि वचनं दृश्यते। पौराणिकं तु वचनं नाभ्यर्हितमिति श्रुतिस्मृतिगतद्वन्द्वाभ्यां प्रागेवोपपादितमित्यलम्। करचरणनेत्रादिसर्वावयवोपेतशरीरस्य विष्णुदैवत्यसर्वमेधयागेऽग्नौ प्रक्षेपं कृत्वा देवदेवत्वं सर्वलोकव्यापनं च शिवो लब्धवानिति 'महादेवः सर्वमेधे' इति भारतवचनं कथयति। शरीरस्यैकावयवेन तत्रापि वामेन लोचनेनोत्पाटितेन शिवार्चनं कृत्वा विष्णुना चक्रं लब्धमिति कश्चिद्वचनं कथयति। तत्र विचारशीलाः पण्डिता द्वयोर्मध्य आधिक्यं विदांकुर्वन्तु।

इदं तु बोध्यम्—'त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मा मृतात्' इति मन्त्रे पुष्टिवर्धनमिति हेतुगर्भविशेषणस्वारस्याच्छिवयजनं पुष्ट्यर्थमिति सिध्यति। मुक्षीयेति मध्यमपुरुषस्वारस्यात्त्वमिति पदमस्ति। तथा च पुष्ट्यर्थं सुगन्धिं त्र्यम्बकं वयं यजामहे, त्वं मृतियुक्तान्मृत्युशब्दितसंसाराद्बन्धनात् उर्वारुकमिव मा मां मुक्षीय मोचयेति मन्त्रार्थः प्रतीयते। यजनकर्मत्वं यस्य कथितं तद्भिन्नस्यैव मोक्षदातृत्वमुत्तमपुरुषमध्यमपुरुषाभ्यां प्रतीयते, 'अहं देवदत्तं परिचरामि त्वमापदो मोक्षय' इत्यादौ लोके तथैवावगमात्। तथा च शिवस्य पुष्टिवर्धकत्वमेव, मोक्षदातृत्वं तु तदन्यस्येत्युक्तमन्त्रस्वारसिकार्थ इति।

यत्तु श्वेताश्वतरोपनिषदि 'यो वै देवानां प्रभवश्चोद्भवश्च विश्वाधिपो रुद्रो महर्षिः हिरण्यगर्भं जनयामास पूर्वं स नो बुद्ध्या शुभया संयुनक्तु' इति मन्त्रेण हिरण्यगर्भस्य रुद्रजन्यत्वं प्रतीयते अतो न रुद्रजनको हिरण्यगर्भ इति, तन्न; तैत्तिरीये 'प्रजापतौ हर आसीत्' इति श्रुत्या बृहदारण्यके 'तच्छ्रेयो-

रूपमत्यसृजत, तत्क्षत्त्रम्, यान्यत्र देवक्षत्त्राणि, इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो मृत्युरीशानः' इति वाक्येन, सामवेदमन्त्रब्राह्मणे प्रपदमन्त्रे 'विरूपाक्षोऽसि दन्ताञ्जिस्त्वं देवेषु ब्राह्मणः अहं मनुष्येषु ब्राह्मणः ब्राह्मणो वै ब्राह्मणमुपधावति उप त्वा धावामि' इत्यारभ्य प्रवृत्तेन 'तस्मै विरूपाक्षाय ब्रह्मणः पुत्राय नमः' इति वाक्येन, शतपथे च काण्वशाखीये 'अभूद्वा इदमप्रतिष्ठा' इत्यारभ्य 'भूतानां च प्रजापतिः संवत्सरायादीक्षत, भूतानां पतिर्गृहपतिरासीत्, उषाः पत्नी' इत्यादिकमुक्त्वा 'भूतानां पतिः संवत्सरे उषसि रेतोऽसिञ्चत्, संवत्सरे कुमारोऽजायत, सोऽरोदीत्तं प्रजापतिरब्रवीत्, कुमार किं रोदिषि, यच्छ्रमात्तपसोऽधिजातोऽसि, सोऽब्रवीत्, अनपहतपाप्मा वा अहमनाहितनामा नाम मे धेहि, पाप्मनोऽपहत्या इति, तं प्रजापतिरब्रवीत्, रुद्रोऽसीति, तदस्य तन्नामाकरोत्, अग्निस्तद्रूपमभवदग्निर्वै रुद्रो यदरोदीत्तस्माद्रुद्रः सोऽब्रवीत्, भवोऽसीति, शर्वोऽसीति, ईशानोऽसीति, पशुपतिरसीति, उग्रोऽसीति, भीमोऽसीति, महादेवोऽसीति' इति श्रुत्या च रुद्रस्य चतुर्मुखजन्यत्वपरब्रह्मजन्यत्वक्षात्त्रियत्वब्राह्मणत्वानामुक्तत्वात्। 'अहं प्रसादजस्तस्य कस्मिंश्चित्कारणान्तरे। त्वं चैव क्रोधजस्तात पूर्वसर्गे सनातनात्' इति रुद्रं प्रति मोक्षधर्मनारायणीयचतुर्मुखवचनरीत्या कल्पभेदेन च तेषां रुद्रे संभवाविरोधः। त्वदुक्तश्वेताश्वतरवाक्यस्य दशोपनिषदनन्तर्गततया अविश्वसनीयत्वमेव।

'तमुष्टुहि यः स्विषुः सुधन्वा यो विश्वस्य क्षयति भेषजस्य। यक्ष्वा महे सौमनसाय रुद्रं नमोभिर्देवमसुरं दुवस्य' इति ऋक्संहितामन्त्रेण हिंस्रत्वापरपर्यायासुरत्वाद्रुद्रस्य रुद्रसौमनस्यार्थं रुद्रस्तुतियागनमस्काराः कार्या इत्यर्थकथनात् रुद्रस्तुतिनमस्कारादयः स्वस्मिन्हिंस्रत्वाभावरूपरुद्रसौमनस्यार्थम्, न तु ते रुद्रोत्कर्षप्रयुक्ता इति सिध्यति। अत एव रुद्राध्यायादौ कथितनमस्कारबाहुल्यं तत्कर्तृकानिष्टनिवृत्तिपूर्वकसौमनस्यसिद्ध्यर्थम्; न तूत्कर्षगमकम्, नमस्कारस्योत्कर्षप्रयुक्तत्वे असुरमिति विशेषणवैयर्थ्यापत्तेः। एतेन नमस्कारबाहुल्यदर्शनाच्छिवस्य सर्वोत्कर्षसिद्धिरित्युक्तमपास्तम्। मन्त्रस्यायमर्थः— स्विषुः

सुसायकः सुधन्वा शोभनधनुष्मान् यः विश्वस्य भेषजस्य सर्वौषधस्य । द्वितीयार्थे षष्ठी । क्षयति नाशयति तम् असुरं रुद्रं स्तुहि, महे उत्सवे यक्ष्वा यज; नमोभिः नमस्कारैः दुवस्य परिचरेति । यत्तु असुरमित्यस्य प्राणदातारमित्यर्थ इति हरदत्ताचार्यकृतचतुर्वेदतात्पर्यसंग्रहव्याख्यात्रा लिङ्गभूभुजोक्तं तन्न; असुरशब्दस्य मुख्यार्थत्यागापत्तेः, संभवति मुख्यार्थत्वे गौणयौगिकार्थकल्पनस्यान्याय्यत्वात् । अत एव ऋक्संहितायामम्भ्रणीसूक्ते 'अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्त वा उ' इति मन्त्रे रुद्रस्य ब्रह्मद्विट्त्वं शरुत्वापरपर्यायहिंस्रत्वं च असुरस्वभावतानियामकमुक्तं संगच्छते । शरु हिंसायाम् । अत एव रुद्राध्याये शिवस्यासुरस्वभावत्वसूचनार्थं प्रथमतो मन्युपदं रुद्रेण मन्योः स्वस्मिन्नप्रेरणार्थं नमनं च 'नमस्ते रुद्र मन्यवे' इत्यनेन कथितम् । किं च 'सोमं वो अद्य रुद्राय शिक्कसे, क्षयद्वीराय नमसा दिदिष्टन, एभिः शिवस्ववानेव यावभिः, दिवः सिषक्ति स्वयशा निकामभिः' इति पठ्यमानश्रुत्या रुद्रोद्देश्यकनमस्कारादिकमपि अन्यस्यैव न रुद्रस्येति प्रतीयते । अस्यार्थः— हे जनाः शिक्कसे शक्ताय क्षयद्वीराय विनश्यद्वीराय रुद्राय क्रियमाणं वः नमसा सह नमस्कारेण सह स्तोत्रं दिवः दीव्यन्त इति दिवः प्रकाशमानदेवान्प्रति दिदिष्टन प्रयच्छत, एभिर्यैर्हेतुभिः, यतो हेतोरिति यावत् । शिवः यावभिः यावद्भिः निकामभिः नितरां फलविशिष्टैः स्ववानेव काम्यमानसर्वफलनिष्ठस्वत्ववानेव, स्वयशा एव न त्वन्यस्मै काम्यं स्वयशो वा सिषक्ति ददातीति । अत एव 'आकाशात्पतितं तोयं यथा गच्छति सागरम् । सर्वदेवनमस्कारः केशवं प्रति गच्छति' इति छन्दोगगृह्यपरिशिष्टोक्तिः संगच्छते ।

किं च 'यस्मै नमस्तस्मै त्वा जुष्टं नियुनज्मि' इति यजुर्वेदश्रुत्या यच्छब्दार्थस्य नमस्वित्वं प्रतीयते । यच्छब्दार्थस्तु 'यत्तत्पदमनुत्तमम्' इति यत्पदस्य सहस्रनामाध्याये विष्णुनामत्वोक्त्या विष्णुरेव न त्वन्यः पूर्वप्रकृतः यस्मै नम इति एतद्वाक्यपूर्ववाक्येषु यच्छब्दपरामर्शयोग्यस्य कस्यचिद्देवस्यानुक्तेः ।

न च बोधायनाश्वलायनोक्तस्मार्तशूलगवकर्माङ्गमन्त्रेषु 'ईशानाय त्वा जुष्ट-मुपाकरोमि' इत्यादिषु रुद्रो बोध्यत इति शङ्क्यम्; 'ईशानाय' इत्यादिमन्त्राणां 'यस्मै नमः' इत्येतद्वाक्यपूर्वस्थत्वाभावेन यच्छब्दप्रतिपादनयोग्यस्येशानस्य पूर्वप्रकृतत्वासंभवात् । 'यस्मै नमः' इति श्रुत्युक्तनमस्कारोद्देश्यत्वं विष्णो-रेवेति निष्प्रत्यूहम् । किं च 'यस्मै नमस्तच्छिरः' इत्यारभ्य 'स वा एष दिव्यः शाक्करः शिंशुमारः' इति तैत्तिरीयश्रुतौ विष्णोः शिंशुमारहृदयत्वेन निगदात् अवनीन्द्रप्रजापत्यादीनां शिरोऽव्यतिरिक्ततत्तदवयवत्वकथनात् नमनशेषी यच्छ-ब्दार्थः शिरस्त्वेन कथितो दृश्यते । स च 'यत्तत्पदमनुत्तमम्' इति भगवन्नाम-सहस्रप्रसिद्धयत्तत्पदनामधेयो भगवानेव न तु रुद्रः सूर्यादिर्वा; तच्छ्रुतौ पूर्व-वाक्येषु तेषामप्रस्तुतत्वात् । परमात्मोपासनस्थानानां मध्ये हृदयस्थानस्योत्तम-त्वेन शरीरावयवानां मध्ये शिरस उत्तमाङ्गत्वेन विष्णोस्तदुभयरूपत्वकथनं युक्तमेव । एकस्योभयावयवत्वास्वीकारे शिवस्य परब्रह्मत्ववादिनापि शिंशुमार-पुच्छत्वेन निरूपितनपुंसकब्रह्मशब्दार्थपरमात्मन एव नमस्वियच्छब्दार्थशिव-रूपत्वं वक्तव्यम् । अन्यथा शिरोरूपावयवत्वेन पुच्छरूपावयवत्वेन च रूपि-तयोः शिवपरमात्मनोः परस्परं भेदापत्त्या नमस्विनः शिवस्य परमात्मत्वानुप-पत्तेः । यत्तु 'यस्मै नमः' इति यच्छब्देन अनुक्तदेव एव नमस्वितया ग्रही-तव्यः स च शिव एवेति, तन्न; स्कन्दविनायकादीनामनुक्तत्वाविशेषे शिव-स्यैव तत्र ग्रहणमित्यस्यानुचितत्वात् । 'स वै वो वरं वृणा इति, वृणीष्वेति, स एतमेव वरमवृणीत, पशूनामाधिपत्यम्, तदस्यैतत्पशुमान्नामेति, अहमेव पशूनामधिपतिरसानीति, तस्माद्रुद्रः पशूनामधिपतिः' इति शिवस्य परा-धीनैश्वर्यप्रतीतिः ।

यत्तूक्तं हरदत्ताचार्येण श्रुतिषु शिवस्येश्वरत्वोक्त्या जीवानामनीश्वरत्वोक्त्या जीवसकाशादीश्वरस्य शिवस्य पाशुपत्यवरप्रार्थनादेरनुपपन्नत्वात् 'पशुपतये नमः' इत्यादिनित्यसिद्धपाशुपत्यानुवादश्रुतेश्च नित्यसिद्धपाशुपत्यबोधकपुराणवचन-विरोधाच्च पाशुपत्यवरप्रार्थनापरश्रुतिवाक्यद्वयमर्थवाद इति, तन्न; 'स ईश्वरो

रुद्रो भूत्वा' इति तैत्तिरीयश्रुतौ रुद्रशब्दो नाग्निपरः, लक्षणापत्तेः अग्नौ तत्पदशक्तिग्राहककोशादिप्रमाणाभावात् 'रुद्रो वा एष यदग्निः' इति श्रुत्या 'यो रुद्रः एषः अग्निः' इति प्राथम्यवाशब्दावगतोद्देश्यपररुद्रोद्देशेनाग्नित्वविधानात् रुद्रस्याग्निशब्दसंभवेऽपि अग्नौ रुद्रशब्दप्रवृत्तौ प्रमाणं नास्त्येव। तथा च मृत्पिण्डो घटो भूत्वेत्यत्र मृत्पिण्डोपादेयस्य घटस्य मृत्पिण्डशब्दः मृत्पिण्डतादात्म्यप्रयुक्त औपचारिकः। तथा ईश्वरस्यैव सतो रुद्रभावोक्त्या ईश्वरोपादेयस्य रुद्रस्य ईश्वरशब्दः ईश्वरतादात्म्यप्रयुक्तो न तु मुख्य इत्यवगम्यते। शिवस्येश्वरत्वस्वीकारे उक्तश्रुतिविरोधापत्त्या अनीश्वरत्वावश्यिकतया अनीश्वरस्य शिवस्य पाशुपत्यवरप्रार्थनादेरुपपन्नतया तेन वरप्रार्थनाश्रुत्योरर्थवादत्वासंभवात् 'पशुपतये नमः' इति श्रुत्या प्रार्थनासिद्धपाशुपत्यानुवादे बाधकाभावात् पुराणानभ्यर्हितत्वस्य प्रागेवोपपादितत्वाच्च। किं च शिवस्य यज्ञरूपत्वमवश्यं स्वीकर्तव्यम्; 'एतद्रुद्रस्य धनुः, रुद्रस्य त्वेव धनुरार्त्निः, शिर उत्पिपेष, स प्रवर्ग्योऽभवत्, तस्माद्यः स प्रवर्ग्येण यज्ञेन यजते, रुद्रस्य स शिरः प्रतिदधाति' इत्यारुणकेतुकश्रुतियज्ञस्यैवतच्छिरःप्रतिदधातीतिच्छान्दोग्यश्रुतिभ्यां परस्परार्थप्रत्यभिज्ञया रुद्रयज्ञयोरैक्यावगतेः 'रुद्रो वै यज्ञः, विष्णुर्वै यज्ञः, प्रजापतिर्वै यज्ञः, इन्द्रो वै यज्ञः' इति बह्वृचब्राह्मणेन रुद्रविष्णुप्रजापतीन्द्रसाधारणस्य यज्ञशब्दस्य सामान्यशब्दतया रुद्ररूपविशेषे प्रकृते पर्यवसानात् वैष्णवपुंसूक्तस्थत्वाद्धेतोः 'यज्ञेन यज्ञमयजन्त' इत्यत्र सामान्यशब्दस्यापि द्वितीयान्तयज्ञशब्दस्य विष्णुरूपविशेष इव। न च 'यज्ञो वै विष्णुः' इति श्रुतेः विष्णोर्यज्ञशब्दस्य विशेषशक्तिरिति शङ्क्यम्; प्राथम्यवैशब्दाभ्यां यज्ञस्योद्देश्यत्वावगत्या यज्ञोद्देशेन विष्णुत्वविधानावगतेः। 'पर्वतो वह्निमान्' इत्यत्र उद्देश्यपर्वते विधेयविशिष्टबोधकवह्निमच्छब्दवत् उद्देश्ययज्ञे विधेयविष्णुत्वविशिष्टवाचकशब्दसिद्धावपि विधेयवह्निविशिष्टत्वावच्छिन्नान्तर्गतमहानसादावुद्देश्यपर्वतशब्दाप्रवृत्तिवत् विधेयविष्णुत्वावच्छिन्ने लक्ष्मीकान्ते उद्देश्ययज्ञपदस्य नियमेन प्रवृत्त्यसंभवेन यज्ञशब्दस्य विशेषशक्तितो विष्ण्वर्थकत्वासिद्धेः। एतेन 'पुरुषो वै

रुद्रः' इति श्रुतावपि पुरुषशब्दवाच्यनारायणे रुद्रशब्दसिद्धावपि विधेयरुद्रत्व-विशिष्टे रुद्रे पुरुषशब्दो मुख्यवृत्त्या न प्रवर्तत इति सिद्धम्। पुरुषशब्दस्य 'तस्यैकत्वं महत्त्वं हि स एकः पुरुषः स्मृतः। महापुरुषशब्दं हि बिभर्त्येकः सनातनः' इति पञ्चमवेदश्रीमहाभारतनारायणीयवचनेन पुरुषशब्दस्य भगवति नारायणे शक्तिग्राहकेण हेतुनिर्देशसहितेन नारायणमात्ररूढत्वम्। अन्यत्र पुंसि निरूढलक्षणा। कोशोऽपि 'पुरुषावात्ममानवौ' इत्यादिर्निरूढलक्षणातात्पर्यग्राहकः; न तु रूढिग्राहकः, विष्णौ रूढिग्राहकनारायणीयवचनविरोधापत्तेः। विष्णोस्तु यज्ञोपरि वर्तमानत्वमेव न तु यज्ञत्वम्, 'अधियज्ञोऽहमेवात्र देहे' इति भगवद्गीतावचनप्रामाण्यात्।

एतेन वाजसनेयशाखायाम् 'विष्णोः शिरः प्रच्छिदतु' इति वाक्येन विष्णुशिरसोऽपि प्रच्छेदनमुक्तमिति परास्तम्; 'प्रच्छिदतु' इति लोटा प्रच्छेदनस्य प्रार्थनाविषयत्वोक्त्या 'रुद्रस्य शिर उत्पिपेष' इतिवत्तच्छेदनस्य सिद्धत्वानुक्तेः। विष्णुशिरःप्रच्छेदनमपि विष्णुद्वेषिणः कस्यचिदाशंसितं भवेत्। तदनुवदति 'विष्णोः शिरः प्रच्छिदतु' इति श्रुतिः।

'देवा यद्यज्ञं तन्वानाः, अबध्नन्पुरुषं पशुम्' इत्यस्य पुरुषं प्रति पुरुषं नारायणमुद्दिश्य देवाः पशुमबध्नन्निति योजना; पुरुषशब्दस्योद्देश्यपरत्वानङ्गीकारे तद्वाचकपदान्तरकल्पनागौरवापत्तेः। 'तं यज्ञं बर्हिषि प्रौक्षन्, पुरुषं जातमग्रतः' इत्यस्य पुरुषं प्रति यज्ञं तन्वाना अग्रतो जातम् 'तस्माद्विराडजायत' इत्युक्तहिरण्यगर्भं बर्हिषि यागे प्रौक्षन्निति योजना; अग्रतो जातत्वस्यास्मिन्पुरुषसूक्ते हिरण्यगर्भ एवोक्तत्वात्, पुरुषसूक्तगतमन्त्रार्थस्य पुरुषसूक्ताग्रजातमादायोपपत्तौ श्रुत्यन्तरोक्ताग्रजातान्यग्रहणस्यायुक्तत्वात्। 'यत्पुरुषेण हविषा' इत्यत्र पुरुषेणेति तृतीया 'अध्ययनेन वसति' इतिवत्फलस्य हेतुत्वार्थिका। अध्ययनार्थवासवत्पुरुषाप्त्यर्थं हविषा यज्ञमतन्वतेति वाक्यार्थः। एतेन पुंसूक्ते पुरुषशब्दितस्य विष्णोर्यागपशुत्वं यागप्रोक्षितत्वं यागहविष्ट्वं चोक्तम्। अतो विष्णुद्रव्यकयागे शिव एवोद्देश्य इति हरदत्तालिङ्गभूभृदुक्तमपास्तम्।

भरतशास्त्रे तन्मुद्रया तत्तद्देवप्रदर्शनप्रकरणे 'वज्रिण्या मुद्रया शक्रं पद्मिन्या दर्शयेद्विधिम्। शङ्खिन्या केशवं रुद्रं शिरस्यञ्जलिमुद्रया' इति श्लोकोऽस्ति। तेन वज्रं शक्रस्य चिह्नम्, पद्मं चतुर्मुखस्य, शङ्खं विष्णोश्चिह्नम्; तत्तच्चिह्नमुद्रया तत्तच्चिह्नवतः प्रदर्शनमुक्तम्। तत्समभिव्याहारादञ्जलिबन्धस्य रुद्रचिह्नत्वमवगम्यते। तेन चिह्नेन रुद्रस्य प्रदर्शनोक्त्या शिवः शिरस्यञ्जलिबन्धरूपं चिह्नं धत्ते, यथा वज्रमिन्द्रः पद्मं हिरण्यगर्भः शङ्खं विष्णुः स्वस्वदेहावयवे धत्ते तद्वत्। तथा च रुद्रः शिरस्यञ्जलिबन्धं यमुद्दिश्य करोति, स तावत्परमपुरुष एव भवितुमर्हतीत्यवगम्यते। 'आकाशात्पतितं तोयम्' इत्यादिस्मृत्या विष्णोरेव सर्वनमसामुद्देश्यत्वोक्त्या रुद्रकृतशिरस्थञ्जलिबन्धस्यापि नमनविशेषत्वेन नारायणोद्देश्यकत्वपर्यवसानम्। दशोपनिषद्बहिर्भूतोपनिषदामपि श्रुतिवद्विशेषतः प्रामाण्यमङ्गीकुर्वन्तः केचिन्नृसिंहतापिन्यामनुष्टुब्मन्त्रराजविवरणे तन्मन्त्रगतनमामीतिपदस्य विवरणावसरे अथ कस्मादुच्यते नमामीति यं सर्वे देवा मुमुक्षवो ब्रह्मवादिनश्च नमन्ति तस्मादुच्यते नमामीति सर्वदेवकर्तृकनमस्काराणां ब्रह्मवादिकर्तृकाणां मुमुक्षुकर्तृकाणां सर्वेषां नमस्काराणां नृसिंहरूपी भगवानेव शेषी इत्युक्त्या अन्येषां नमस्कारशेषित्वं नास्तीति वदन्तीत्यलम्।

'त्वं देवेषु ब्राह्मणोऽहं मनुष्येषु ब्राह्मणः' इति श्रुतिवाक्येन 'विरूपाक्षोऽसि दन्ताञ्जिः' इति पूर्ववाक्यसहितेन शिवस्य ब्राह्मणत्वं प्रतीयते। 'तच्छ्रेयोरूपमत्यसृजत, तत्क्षत्रम्, यान्यत्र देवक्षत्त्राणि इन्द्रो वरुणः सोमो यमो रुद्र ईशानः' इति बृहदारण्यकश्रुत्या शिवस्य क्षत्त्रियत्वं प्रतीयते। यदा परब्रह्मणः सकाशाच्छिवस्योत्पत्तिस्तस्मिन्कल्पे शिवस्य क्षत्त्रियत्वम्, यस्मिन्कल्पे चतुर्मुखाच्छिवस्योत्पत्तिस्तस्मिन्ब्राह्मणत्वमित्यविरोधाय व्यवस्था कार्या; छन्दोगप्रपदमन्त्रे ब्राह्मणत्वेनोक्तस्य शिवस्य तस्मिन्नेव प्रपदमन्त्रे अन्ते 'विरूपाक्षाय ब्रह्मणः पुत्राय' इति ब्रह्मपुत्रत्वाभिधानात्, यत्र क्षत्त्रियत्वमुक्तं शिवस्य तस्मिन्बृहदारण्यकश्रुतिवाक्ये 'तच्छ्रेयोरूपमत्यसृजत, तत्क्षत्त्रम्' इति परब्रह्मजन्यत्वाभिधानाच्च। न ह्येवं पठ्यमानवेदवाक्ये अवताररूपविडम्बनेन

विना मूलभूतस्य विष्णोरन्यत उत्पत्तिः, जीवत्वव्याप्यब्राह्मणत्वक्षत्त्रियत्वादि जीवत्वगमकं श्रूयते येन तस्यापि जीवत्वं स्यात् । 'विष्णुर्योनिं कल्पयतु' इति श्रुतिर्योन्युत्पादकत्वं वदति न योनित्वं न योनिरूपत्वं न योनिमत्त्वं वा । शैवबहूक्तश्वेताश्वतरोपनिषदि ज्ञानकाण्डबहिर्भूतायाम् 'त्वं स्त्री त्वं पुमानसि, त्वं कुमार उत वा कुमारी, त्वं जीर्णो दण्डेन वञ्चसि, त्वं जातो भवसि विश्वतोमुखः' इति मन्त्रेण प्रथमतः शिवस्य स्त्रीत्वमुक्त्वा स्त्रीभावमापन्नस्यैव पश्चात्पुंभावादिकमुक्तम् । अतोऽपि शिवस्य स्त्रीरूपमेव मूलरूपमित्यवगम्यते । किं च विष्णोः पुरुषमहापुरुषपुरुषोत्तमयज्ञपुरुषपुराणपुरुषनामधेयस्य स्त्रीत्वं पुरुषनामधेयगन्धरहितस्य पुरुषशब्दघटितनामधेयरहिताशिवस्य पुंस्त्वं च शैव-शाक्तपुराणशैवागमानुसारेण वदन्कथं प्रमाणानुसारी वक्ता स्यात्? किं च विष्णोरवतारविडम्बनेन विना रामायणभारतादिषु योनिजत्वं न श्रूयते । शिवस्य तु पठ्यमानश्रुतौ शतपथब्राह्मणान्तर्गताष्टमूर्तिब्राह्मणे हिरण्यगर्भस्य प्रजापतेरुषा पत्नीत्युक्त्वा 'भूतानां पतिः संवत्सर उषसि रेतोऽसिञ्चत्, संवत्सरे कुमारोऽजायत, सोऽरोदीत्, तं प्रजापतिरब्रवीत्कुमार किं रोदिषि, यच्छ्र-माज्जातोऽसीति, सोऽब्रवीत्, अनपहतपाप्मा वा अहमनाहितनामा नाम धेहि पाप्मनोऽपहत्या इति, तं प्रजापतिरब्रवीत्, रुद्रोऽसीति, हरोऽसीति, शर्वो-ऽसीति, ईशानोऽसीति, पशुपतिरसीति, उग्रोऽसीति, भीमोऽसीति, महादेवो-ऽसीति' इत्यादिना शुक्रशोणितजन्यत्वं योनिजत्वं च स्पष्टमेवोक्तम् । विष्णोस्तु मूलरूपस्य पठ्यमानश्रुतौ योनिजत्वं न कुत्रापि श्रूयते । न च शिवो द्विविधः तुरीयस्तृतीयश्च तृतीयस्योत्पत्त्यादिकं योनिजत्वं चेति शङ्क्यम्; 'एक एव रुद्रो न द्वितीयाय तस्थे' इति पठ्यमानतैत्तिरीयश्रुतौ एकत्वरूप-विशेषणसंबन्ध्येवकारेण 'शङ्खः पाण्डर एव' इतिवत् रुद्रे एकत्वायोगव्यवच्छे-दकेन एकत्वविरोधिद्वित्वबहुत्वप्रतिषेधसिद्ध्या रुद्रे द्वित्वाद्यसंभवादेकस्यैव रुद्रस्य शरीरभेदेन रूपभेदा एव 'सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम्' इति प्रत्यक्षश्रुत्यानूद्यन्ते । तथैव सायणाचार्यैर्ऋग्वेदभाष्यभूमिकायामेकस्यैव रुद्रस्य

रूपभेदाभिप्राया 'सहस्राणि सहस्रशो ये' इति श्रुतिरित्युक्तम् ।

'रुद्राणां शंकरश्चास्मि' इति रुद्रविग्रहाणां बहूनामेकरुद्रचेतनाविष्टानां मध्ये सुखकरशरीरविशेषाविष्टत्वेन रूपेण एकस्यैव रुद्रस्य भगवद्विभूतिषु प्राधान्यमुक्तम्; यथा एकनारायणाविष्टानां द्विभुजचतुर्भुजमत्स्यकूर्मादिविग्रहाणां मध्ये द्विभुजश्रीरघुनाथशरीरस्याधिक्योक्तिस्तद्वदिति ध्येयम् । एतेन 'आ वो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः, अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम्' इति ऋक्सामशाखीयमन्त्रेण रुद्रस्याध्वरराजत्वं प्रतीयते; अध्वरश्च विष्णुः, 'यज्ञो वै विष्णुः' इति श्रुतेः; तथा च विष्णोरपि शिवो राजेति प्रतीयत इति शैवोक्तमपास्तम्, उक्तमन्त्रस्य रुद्रे अध्वरराजत्वाप्रतिपादकत्वात् । तथा हि— वः युष्माकं राजानं प्रशासितारम् । राजानमित्यस्य ससंबन्धिकत्वेन प्रतिसंबन्ध्यपेक्षायामुत्थितायामव्यवहितपूर्वत्वइतियुष्मच्छब्देन प्रतिसंबन्धिनिर्देशसंभवे राजानमिति पदश्रवणकाले अनुपस्थितोत्तरवर्त्यध्वरस्येति पदेन राजानमिति पदोत्थिताकाङ्क्षाशमनकल्पनस्यानुचितत्वात् । अध्वरस्य रुद्रं यज्ञसंबन्धिनं रुद्रम् । षष्ठ्याः संबन्धार्थकत्वस्य सुप्रसिद्धत्वात् । होतारं होमकर्तारम् । होमस्य होमद्रव्यापेक्षायामव्यवहितोपस्थितरुद्रस्यैव कर्मत्वेनान्वयस्य न्याय्यत्वात् यज्ञसंबन्धिरुद्रकर्मकहोमकर्तारमित्यर्थः पर्यवसन्नः । सत्ययजमवितथयजनम्, रोदस्योः द्यावापृथिव्योः, हिरण्यरूपमग्निं द्यावापृथिव्यवस्थितमग्निमिति यावत् । अचित्तात् न विद्यते चित्तं यस्य सः, जड इति यावत् । तनयित्नोः स्तनयित्नोः जडात्स्तनयित्नोः अवसे रक्षणार्थं पूर्वमेव आकृणुध्वमाराधयध्वमिति मन्त्रार्थः । अनेन मन्त्रेण रुद्रस्याग्निकर्तृकहोमकर्मत्वावगमेन शैवाभिमताध्वरराजत्वविरोधस्यैव प्रसक्तिर्न शैवाभिमतस्य सिद्धिः । किं च 'यज्ञो वै विष्णुः' इति श्रुत्या यज्ञस्य विष्णुशब्दप्रतिपाद्यत्वेऽपि विष्णोर्यज्ञशब्दप्रतिपाद्यत्वस्य पूर्वमेव निराकृतत्वेन यज्ञशब्दपर्यायाध्वरशब्दस्य विष्णुपरत्वं नास्तीति निष्प्रत्यूहम् । एतेन महाभारते उपमन्यूपाख्याने द्रोणपर्वान्त्योपान्त्याध्याययोः सौप्तिकपर्वीयाश्वत्थामाराधनसंतुष्टरुद्रवचनेषु विष्णोः शिवादु-

त्पत्तिः, शिवपूजादिलक्षणम्, शिवाराधनम्, शिवाङ्कग्रहणम्, सर्वोत्तमत्वेन शिवस्तवनम्, स्ववामनेत्रार्चनसंतुष्टशिवाच्चक्रग्रहणं च प्रतिपादितमस्ति । तत्रै-वान्यत्र साल्वयुद्धे कृष्णशरीरे शोणितस्रवणं यमसभायां दाशरथेः श्रीरघु-नाथस्यापि यमवश्यानां मध्येऽवस्थानं च कथितमस्ति । अतो विष्णव-पेक्षया शिवस्योत्कर्ष इति शैवोक्तमपास्तम्; श्रुतिभारतार्थविरुद्धत्वात् । प्रत्य-क्षपठ्यमानश्रुतौ श्रीविष्णोः 'तस्माद्विराडजायत' इति निखिलजगत्कर्तृचतुर्मुख-जनकत्वोक्त्या निखिलजगत्स्रष्टृत्वम् 'विष्णुर्गोपा अदाभ्यः' इति निखिल-पालकत्वम् 'हरिं हरन्तमनुयन्ति देवाः' इत्यनेन हरन्तं जगत्संहर्तारं हरिं देवा अनुयन्तीत्यर्थकेन निखिलसंहर्तृत्वं श्रूयते । उक्तत्रयमेव 'यतो वै—' इति- श्रुति- 'जन्माद्यस्य यतः' इति- सूत्रसिद्धं ब्रह्मलक्षणम् । न चैतल्लक्षणं-विष्णोरिव शिवादेः संप्रतिपन्नश्रुतौ दृश्यते, येन तस्य ब्रह्मत्वं स्यात् । यत्तु 'हरिं हरन्तम्' इत्यत्र हरणक्रियायां हरेः कर्मत्वमिति, तन्न; विशेष्याध्या-हारापत्तेः, संभवति श्रूयमाणस्य हरिमित्यस्य हरन्तमिति यौगिकविशेषणपदा-पेक्षितविशेष्यत्वे अध्याहारस्यायुक्तत्वात् । यद्यपि हरन्तमित्यस्य विशेष्या-काङ्क्षावत्कर्माकाङ्क्षाप्यस्ति, तथापि हरन्तमित्येतद्घटकहृन्धातोरुपसर्जनस्य कर्माकाङ्क्षापेक्षया हरणक्रियाकर्तृपरप्रत्ययरूपप्रधानस्य विशेष्याकाङ्क्षाया बल-वत्त्वेन हरिमिति श्रूयमाणपदस्य प्रधानाकाङ्क्षाशामकार्थपरत्वस्यैव न्याय्यत्वं कर्माकाङ्क्षाशामकं तु संकोचे प्रमाणाभावादौचित्याच्च जगदेव । परं ब्रह्म हरिभावापन्नमेव शिवभावमापद्यते, 'परात्परतरं ब्रह्म तत्परात्परतरो हरिः । तत्परात्परतरोऽधीशस्तन्मे मनः शिवसंकल्पमस्तु' इति श्रुतेः । अत्र ब्रह्मपदं न चतुर्मुखपरम्, पुंलिङ्गत्वापत्तेः । किं तु परब्रह्मपरम् । तत्परादित्यत्र तदिति भिन्नपदं न समस्तम्, समस्तत्वे परब्रह्मापेक्षया हरिहरयोरुत्कर्षापत्तेः । ब्रह्म परात्परतरमित्येकं वाक्यम् । तद्ब्रह्म परात्परतरो हरिः इति द्वितीयं वाक्यम् । तत् हरिभावापन्नं ब्रह्म । परात्परतरोऽधीश इति तृतीयं वाक्यम् । तत्तस्मात् मे मनः शिवसंकल्पं मङ्गलसंकल्पमस्त्विति साकाङ्क्षं चतुर्थं वाक्यम् ।

'ईशानः सर्वविद्यानाम्' इति श्रुतिः सर्वविद्येशानत्वसर्वभूतेश्वरत्ववेदाधिपतित्वब्राह्मणाधिपतित्वविशिष्टः ब्रह्मा चतुर्मुखः मे शिवः मङ्गलकरोऽस्तु इति प्रार्थनां सदा सर्वकाले शिवः मङ्गलकरः ॐ भवामीति चतुर्मुखाङ्गीकारं च स्वरसगत्या कथयति । ओमित्यङ्गीकार इति प्रसिद्धं लोके । शिवः रुद्रः मे ब्रह्मास्त्वित्यर्थस्तु अनुपपन्न इति स्पष्टम् । तस्मादियं श्रुतिर्न रुद्रपरेत्यलम् ।

शतरुद्रीयं कल्पविशेषे मन्युरूपं प्रजापतिपुत्रं रुद्रं क्षत्रियमुक्तरुद्ररोदनविप्रुडात्मकरुद्रांश्च प्रतिपादयति । माध्यंदिने पठ्यमानशतपथब्राह्मणे नवमाध्याये 'प्रजापतेः वित्रस्तात् देवता उदक्रामन्, तमेक एव देवो नाजहत, मन्युरेव सोऽस्मिन्नन्तर्विततोऽतिष्ठत्, सोऽरोदीत्, तस्य यान्यश्रूणि प्रास्कन्दंस्तान्यस्मिन्मन्यौ प्रातिष्ठन्, स एव शतशीर्षा रुद्रः समभवत्सहस्राक्षः, अस्माद्वै बिभिमः, यद्वै नो कथं न हिंस्यादिति, तस्मादेतमन्नं समहरन्, शतरुद्रीयं तेनैनमशामयम्, 'तद्यदेतं शतशीर्षाणं रुद्रमेतेनाशमयन् तस्माच्छतरुद्रीयमित्याचक्षते, नमस्ते रुद्र मन्यव इति, स एवान्तर्मृत्युर्विततोऽतिष्ठत्, तस्मादेतं नमस्करोति, उतोत इषवे नमः, बाहुभ्यामुत ते नम इति, इष्वा च बाहुभ्यां च भीषयमाणोऽतिष्ठत्, स एष क्षत्त्रं देवः यः शतशीर्षा समभवत्, विश इतरे ये विप्रुड्भ्यः समभवन्, शतेपुधयः, या अन्या विप्रुषोऽपतन्, ता असंख्याताः, सहस्राणि, इमाँल्लोकान्, अनुप्राविशन्, तद्रुदितात्समभवन्, तस्माद्रुद्राः, शतशीर्षा रुद्रो भीषयमाणोऽतिष्ठत्, नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमः, ते घोरतराः, अशान्ततराः, ये उभयतो नमस्काराः, उभयत एवैनानेतद्यज्ञेन नमस्कारेण शमयति' इत्यादिवाक्यानां स्वारस्याच्छतरुद्रीयोक्तरुद्रनमस्कारा अपि 'मृत्युस्तस्मान्नमस्करोति' इष्वा च बाहुभ्यां च भीषयमाणोऽतिष्ठत्, ते घोरा अशान्ततराः, उभयत एवैनान्, नमस्कारेण शमयति' इत्यादिवाक्यस्वारस्येन मृत्युरूपत्वभीषणत्वघोरत्वाशान्ततरत्वप्रयुक्ता न तूत्कर्षप्रयुक्ताः । शतरुद्रीयप्रतिपाद्यः शतशीर्षा रुद्रः क्षत्त्रियः । अन्ये च विप्रुड्रुद्रा वैश्याः । 'स एष क्षत्त्रं देवः शतशीर्षा, विश इतरे ये विप्रुड्भ्यः समभवन्' इति

वाक्यस्वारस्यात् । एतेन शतरुद्रीयोक्तो न ब्रह्मपुत्रः, किं तु तुरीयः; स च ब्राह्मणः; तस्य नमस्कारा उत्कर्षप्रयुक्ता इति पुराणादिवचनमवलम्ब्य प्रतिपादनं हरदत्ताख्यप्रभृतीनामपास्तम्, उक्तपठ्यमानश्रुतिविरोधेन तादृशपुराणादीनामप्रमाणत्वात् । नेयं श्रुतिर्दशोपनिषद्भिन्नोपनिषत्तुल्या माध्यंदिनशाखीयैरिदानीमपि पठ्यमानत्वेन प्रत्यक्षवेद्यत्वात् । मन्युरुद्र एव विप्रुट्परिणामरुद्रशरीरेषु प्रविष्ट इति एकस्यैव रुद्रस्य शरीरभेदा एव विप्रुड्रुद्राः, न तु रुद्रचेतनभेदः । 'एक एव रुद्रो न द्वितीयाय तस्थे' इति पठ्यमानश्रुताविव रुद्र एकत्वायोगव्यवच्छेदार्थकविशेषणसंबन्ध्येवकारश्रवणात् 'शङ्खः पाण्डर एव' इतिवत् ।

महाशैवाप्पय्यदीक्षितैर्भारततात्पर्यसंग्रहे 'विशालाक्षः स्थाणुर्द्रुहिणतनयः संहरणकृत्सरोजाक्षक्रोधप्रभव इति वैशेषिकपदम् । विभूतित्वज्ञप्त्यै किमपि निहितं नाथ नियतं निकर्षोक्तिस्ताभ्यां भवत इति बुद्धिं निरसितुम्' इति श्लोकेन विशालाक्षत्वस्थाणुत्वब्रह्मपुत्रत्वसंहर्तृत्वविष्णुक्रोधजन्यत्वान्यतमं भारते यस्य रुद्रस्योक्तं स विष्णुचतुर्मुखन्यूनो विभूतिरुद्रः तद्रहितस्तुरीयरुद्रो विष्ण्वादिपूजितो भारते कथित इत्युक्तम् । तदत्यन्तासंगतमित्येतत् विशालाक्षत्वस्थाणुत्वादिशून्यरुद्रो भारते नास्ति तद्वानेक एव रुद्रो भारतेऽस्तीति प्रतिपादनेन निरूप्यते। तथा हि—द्रोणपर्वण्युपान्त्याध्याये 'जन्मकर्मतपोयोगास्तयोस्तव च पुष्कलाः । ताभ्यां लिङ्गेऽर्चितो देवस्त्वयाऽर्चायां युगे युगे' इत्यश्वत्थामानं प्रति व्यासवचनेन कृष्णार्जुनाभ्यामश्वत्थाम्ना चार्चितस्य रुद्रस्यैकत्वं प्रतीयते । सौप्तिके सप्तमाध्याये 'उग्रं स्थाणुं शिवं रुद्रं सर्वमीशानमीश्वरम् । प्रपद्ये शरणं देवं परमेण समाधिना' इत्यादिना कृपकृतवर्माणौ प्रत्यश्वत्थामवाक्येन अश्वत्थामाराध्यरुद्रस्य स्थाणुत्वोक्त्या तत्रैव सप्तदशाध्याये 'नूनं स देवदेवानामीश्वरेश्वरमव्ययम् । जगाम शरणं द्रौणिरेकस्तेनावधीद्बहून्' 'एवं सिसृक्षुर्भूतानि ससर्ज प्रथमं विभुः । पितामहोऽब्रवीच्चैनं भूतानि सृज मा चिरम् ॥ हरिकेशस्तथेत्युक्त्वा भूतानां दोषदर्शिवान् । दीर्घकालं तपस्तेपे मग्नोऽम्भसि महातपाः' 'उदतिष्ठज्जलाज्ज्येष्ठः प्रजाश्चेमा ददर्श सः । चुक्रोध भगवान्रुद्रो लिङ्गं स्वं

चाप्यविध्यत ॥ तत्प्रविद्धं तथा भूमौ तथैव प्रत्यतिष्ठत' इत्यादिना युधिष्ठिरं प्रति कृष्णवचनेनाश्वत्थामाराधितरुद्रस्य ब्रह्मपुत्रत्वोक्त्या च कृष्णाराधितस्यापि रुद्रस्य ब्रह्मपुत्रत्वं स्थाणुत्वं च निष्प्रत्यूहम् । तत्रैव द्रोणपर्वोपान्त्याध्याये कृष्णस्य रुद्रार्चकत्वं रुद्रस्तोतृत्वं रुद्राद्वरग्रहणं चोक्त्वा 'स एष देवश्चरति मायया मोहयञ्जगत्' इति कृष्णकृतरुद्रार्चनरुद्रस्तुतिवरग्रहणादिकं जगन्मोहनार्थमित्युक्तम् । तदध्यायान्ते 'कृष्ण एव हि यष्टव्यो यज्ञैश्चैव सनातनः' इति कृष्णस्यैव हि यष्टव्यत्वम् एवकारेण कृष्णान्यरुद्रादेः यष्टव्यत्वाभाववत्त्वं चोक्तम् । जगन्मोहनार्थतां विनैव परमार्थत एव कृष्णार्चितत्वादिस्वीकारे कृष्ण एव हि यष्टव्य इत्येवकारेण कृष्णान्यस्य यष्टव्यत्वनिषेधः कथं संगच्छते? एवं द्रोणपर्वण्यन्त्याध्याये 'संग्रामे न्यहनं शत्रूञ्शरौघैर्विमलैरहम् । अग्रतो लक्षये यान्तं पुरुषं पावकप्रभम् ॥ भगवंस्तं ममाचक्ष्व को वै स पुरुषोत्तमः । शूलपाणिर्मया दृष्टस्तेजसा सूर्यसंनिभः' इति व्यासनिकटेऽर्जुनप्रश्नमुपक्षिप्य 'व्यास उवाच— प्रजापतीनां प्रथमं तेजसां पुरुषं प्रभुम् । ईशानं वरदं पार्थ दृष्टवानसि शंकरम् ॥ महादेवं हरं स्थाणुं वरदं भुवनेश्वरम्' इत्युपक्रम्य 'संग्रामे शात्रवान्निघ्नंस्त्वया दृष्टः पिनाकधृक् । सिन्धुराजवधार्थाय प्रतिज्ञाते त्वयानघ ॥ कृष्णेन दर्शितः स्वप्ने यस्तु शैलेन्द्रमूर्धनि । एष वै भगवान्देवः संग्रामे याति तेऽग्रतः' इत्यन्तेनार्जुनसंग्रामदृष्टरुद्रस्य स्थाणुत्वम् 'योगिनां परमं ब्रह्म व्यक्तं ब्रह्मविदां निधिम् । कालकेयं महात्मानं शुक्रपूर्यगुणोदयम्' इति द्रोणपर्वीयाशीतितमाध्यायोक्तार्जुनस्वप्नदृष्टकृष्णप्रदर्शितरुद्ररूपत्वं चोक्तम् । तेनार्जुनस्वप्नदृष्टरुद्रस्य स्थाणुत्वं संग्रामपुरोवस्थितरुद्रत्वं च सिध्यति । संग्रामे अर्जुनपुरोभागदृष्टस्य च मोक्षधर्मे द्विचत्वारिंशदधिकत्रिशततमाध्याये 'यस्तु ते सोऽग्रतो याति युद्धे संप्रत्युपस्थिते । तं विद्धि रुद्रं कौन्तेय देवदेवं कपर्दिनम् ॥ यश्च ते कथितः पूर्वं क्रोधजेति पुनः पुनः । निहतास्तेन वै पूर्वं हतवानसि वै रिपून्' इत्यर्जुनं प्रति कृष्णवचनेन विष्णुक्रोधजत्वं स्पष्टं कथितम् । एवं मोक्षधर्मे चत्वारिंश-

दविकत्रिशततमाध्याये 'अहमात्मा हि भूतानां विश्वेषां पाण्डुनन्दन । तस्मादात्मानमेवाग्रे रुद्रं संपूजयाम्यहम् ॥ न हि विष्णुः प्रणमति कस्मैचिद्विबुधाय वै । ऋते आत्मानमेवैकं ततो रुद्रं नमाम्यहम्' इति (२३—२९) श्लोकाभ्यां कृष्णेनोक्तः । आत्मत्वेन कृष्णपूजितत्वतन्नमस्कृतत्वविशिष्टरुद्रो विष्णुक्रोधजन्य एव । तस्मिन्नेवाध्यायोपक्रमे 'नारायणाय विश्वाय निर्गुणाय गुणात्मने । यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसंभवः ॥ एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ । तदादेशितपन्थानौ सृष्टिसंहारकारकौ' इति (१२–१८) श्लोकाभ्यां रुद्रस्य चतुर्मुखस्येव नारायणजन्यत्वमुक्त्वा तस्यैव (२३—२९) श्लोकाभ्यां नारायणावतारकृष्णपूजितत्वनमस्कृतत्वोक्तेः । कृष्णपूजितत्वमपि लोकार्थमेव, न रुद्राद्वरग्रहणार्थम् । तस्मिन्नेवाध्याये 'न हि मे केनचिद्देयो वरः पाण्डवनन्दन' इति (२७) श्लोकेन कृष्णे अन्याधीनवरदानस्य कृष्णेन प्रतिषिद्धत्वात् । 'सब्रह्मकाः सरुद्राश्च सेन्द्राः सर्वे महर्षयः । अर्चयन्ति सुरश्रेष्ठं देवं नारायणं प्रभुम्' इति (३०) श्लोकेन उपसंहारे चतुर्मुखस्येव रुद्रस्यापि नारायणार्चकत्वोक्तेश्च । 'मया प्रमाणं हि कृतं लोकस्तदनुवर्तते । प्रमाणानीह पूज्यानि ततस्तं पूजयाम्यहम्' इति (२९) श्लोकेन कृष्णेनैव स्वकृतशिवपूजादेर्लोकार्थत्वस्फुटीकरणाच्च । रुद्रस्य कृष्णात्मत्वोक्तिः 'अर्जुनः केशवस्यात्मा कृष्णश्चात्मा किरीटिनः । एकात्मानौ द्विधाभूतौ दृश्येते भुवि मानवैः' इत्यादिवनपर्वादिवचनैः अर्जुनस्येव कृष्णं प्रति रुद्रस्यापि विभूतित्वाभिप्राया, 'पाण्डवानां धनंजयः' इति गीतयार्जुनवत् 'रुद्राणां शंकरश्चास्मि' इति गीतया रुद्रस्यापि भगवद्विभूतित्वोक्तेः । अन्यथा रुद्रस्य कृष्णं प्रति मुख्यात्मत्वोक्तिस्वीकारे एतदध्यायीय- 'एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ । तदादेशितपन्थानौ सृष्टिसंहारकारकौ ॥ सब्रह्मकाः सरुद्राश्च सेन्द्राः सर्वे महर्षयः । अर्चयन्ति सुरश्रेष्ठं देवं नारायणं प्रभुम्' इत्युपक्रमोपसंहारोक्तविष्णुजन्यत्वविष्ण्वर्चकत्वोक्तिविरोधापत्तेः । उपक्रमोपसंहारानुरोधेन मध्यवाक्यानामर्थो वक्तव्य इत्यस्य पूर्वतन्त्रादिन्यायसिद्धत्वात् । न हि शंकरो भगवद्वि-

भूतिरेकादशरुद्रान्तर्गतः, हरिवंशादावेकादशरुद्रपरिगणने शंकरस्यागणनात् । स्थाणुसंज्ञा च भगवदुत्पन्नब्रह्ममनुदक्षाद्येकविंशतिप्रजापत्यन्तर्गतस्यैव प्रजापतिरुद्रस्य मोक्षधर्मचतुस्त्रिंशदधिकत्रिशततमाध्याये 'ब्रह्मा स्थाणुर्मनुर्दक्षो भृगुर्धर्मस्तथा यमः' 'एकविंशतिरुत्पन्नास्ते प्रजापतयः स्मृताः । तस्य देवस्य मर्यादां पूजयन्तः सनातनीम्' इति भगवदुत्पन्नप्रजापतावेव निर्देशात् द्रोणपर्वान्त्याध्याये स्थाणुशब्दनिर्दिष्टरुद्रस्य 'प्रजापतीनां प्रवरम्' इति प्रजापतित्वोक्तेश्च । राजधर्मे दण्डनीत्यध्याये 'बहुरूपो विशालाक्षः शिवः स्थाणुरुमापतिः । सृष्ट्यर्थं ब्रह्मणः पुत्रो ललाटादुत्थितः प्रभुः' इति ब्रह्मपुत्ररुद्रे स्थाणुशब्दः, स्वपुत्ररुद्रं प्रति 'अहं प्रसादजस्तस्य कस्मिंश्चित्कारणान्तरे । त्वं चैव क्रोधजस्तात पूर्वसर्गे सनातनात्' इति मोक्षधर्मनारायणीयनामनिर्वचनाध्यायगतचतुर्मुखवचनेन पूर्वयुगे नारायणोत्पन्नस्यैव वर्तमानयुगे ब्रह्मपुत्रत्वावगत्या स्थाणुसंज्ञासंभवादुपपन्नः । 'यत्र विष्णुः प्रसादार्थं रुद्रमाराधयत्पुरा । वरांश्च सुबहूंल्लेभे दैवतैश्च सुदुर्लभान् ॥ उक्तं च त्रिपुरघ्नेन परितुष्टेन भारत । अपि चास्मत्प्रियतरो लोके कृष्ण भविष्यसि' इत्यारण्यपर्वतीर्थयात्रावचनेन कथितरुद्राराधकविष्णुः न मूलविष्णुः किं तु अवतारविष्णुः, 'कृष्ण भविष्यसि' इति तस्य कृष्णत्वोक्तेः । कृष्णाराध्यत्वं तु कृष्णापेक्षया रुद्रस्यापकर्षस्यैव साधकम्, रामाराध्यभरद्वाजशरभङ्गेन्द्रादिष्विव कृष्णाराध्योदङ्कदुर्वासःप्रभृतिषु तथा दर्शनात् । एवं कृष्णस्यावतारस्य धर्मप्रजापतिपुत्रस्य नराग्रजनारायणस्यावतारस्य च वरदातापि रामवरदात्रिन्द्रवत् कृष्णाद्यपकृष्ट एव, दुर्वासआदिषु तथा दर्शनात् ।

न च राजधर्मे दुर्गातितरणाध्याये 'यं विष्णुरिन्द्रः शंभुश्च ब्रह्मा लोकपितामहः । स्तुवन्ति विविधैः स्तोत्रैर्देवदेवं महेश्वरम् ॥ तमर्चयन्ति ये शश्वद्दुर्गाण्यतितरन्ति ते' इति वचनम्, आनुशासनिकपर्वणि वसुहोममांधातृसंवादे 'ईश्वरश्चेतनः कर्ता पुरुषः कारणं शिवः । विष्णुर्ब्रह्मा शशी सूर्यः शक्रो देवाश्च सान्वयाः ॥ सृजते ग्रसते चेदं तमोभूतमिदं जगत् । अप्रज्ञातं जगत्सर्वं

तदा ह्येको महेश्वरः' इति वचनं च त्रिमूर्त्युत्तीर्णतुरीयशिवे प्रमाणमिति वाच्यम्; नीलकण्ठमिश्रव्याख्याते उत्तरदेशमहाभारतकोशे त्वदुदाहृतवचनादर्शनेन तद्वचनानां प्रक्षिप्तत्वात् दाक्षिणात्यकोशसत्त्वोत्तरदेशकोशासत्त्वाभ्यां तद्वचनानामस्तित्वंनास्तित्वशङ्काकलङ्कितत्वेन निश्चितप्रमाणत्वाभावाच्च ।

किं च द्रोणपर्वणि अन्त्याध्याये 'अर्जुन उवाच—संग्रामे न्यहनं शत्रूञ्शरौघैर्विमलैरहम् । अग्रतो लक्षये यान्तं पुरुषं पावकप्रभम् ॥ ज्वलन्तं शूलमुद्यम्य यां दिशं प्रतिपद्यते । तस्यां दिशि विशीर्यन्ते शत्रवो मे महामुने ॥ तेन भग्नानरीन्सर्वान्मद्भग्नान्मन्यते जनः । भगवंस्तन्ममाचक्ष्व को वै स पुरुषोत्तमः ॥ व्यास उवाच—प्रजापतीनां प्रथमं तेजसां पुरुषं प्रभुम् । भुवनं भूर्भुवं देवं सर्वलोकेश्वरं प्रभुम् ॥ ईशानं वरदं पार्थ दृष्टवानसि शंकरम् । तं गच्छ शरणं देवं वरदं भुवनेश्वरम्' इत्यादिनार्जुनप्रश्नव्यासप्रतिवचनाभ्यां युद्धकालेऽर्जुनस्य पुरतः शूलेन शत्रून्निघ्नन्दृष्टः पुरुषः शंकर इति स्पष्टमुक्तम् । तादृशस्य युद्धभूमाववस्थितस्य शूलपाणिरुद्रस्य परत्वाधायका बहवो गुणा अनन्तरं कथिताः । तदनन्तरम् 'एष देवो महादेवो योऽसौ पार्थ तवाग्रतः । संग्रामे शात्रवान्निघ्नंस्त्वया दृष्टः पिनाकधृक् ॥ सिन्धुराजवधार्थाय प्रतिज्ञाते त्वयानघ । कृष्णेन दर्शितः स्वप्ने यस्तु शैलेन्द्रमूर्धनि ॥ एष वै भगवान्देवः संग्रामे याति तेऽग्रतः' इत्युपसंहृतम् । तेन चोपसंहारेण प्रस्तुतस्यार्जुनदृष्टस्यार्जुनदृष्टस्वाप्निकरुद्रत्वं प्रतीयते । तदध्यायमध्ये 'चराचरस्य जगतः प्रभुः स भगवान्हरः । तस्मात्परतरं नान्यत्किंचिदस्ति महेश्वरात्' इति संग्रामदृष्टरुद्रादुत्तमं वस्तु नास्त्येवेति स्पष्टं कथितम् । मोक्षधर्मे नारायणीये द्विचत्वारिंशदधिकत्रिशततमाध्याये 'यस्तु ते सोऽग्रतो याति युद्धे संप्रत्युपस्थिते । तं रुद्रं विद्धि कौन्तेय देवदेवं कपर्दिनम् ॥ कालः स एव कथितः क्रोधजेति मया तव । निहतास्तेन वै पूर्वं हतवानसि वै रिपून् ॥ अप्रमेयप्रभावं तं देवदेवमुमापतिम् । नमस्व देवं प्रयतो विश्वेशं हरमक्षयम् ॥ यश्च ते कथितः पूर्वं क्रोधजेति पुनः पुनः' इत्यादिना संग्रामपुरोभागदृष्टशत्रुवधयुक्तरुद्रस्य

नारायणक्रोधजन्यत्वमुक्तम् । तादृशक्रोधजन्यत्वस्यौपचारिकत्वशङ्कां व्यावर्त्य वास्तवत्वप्रदर्शनार्थं पुनः पुनरिति क्रोधजन्यत्वे पौनःपुन्येन कथितत्व-मुक्तम् । तथा चोदाहृतमोक्षधर्मग्रन्थेन संग्रामाग्रवर्तिशत्रुहननयुक्तार्जुनदृष्ट-क्रोधजरुद्रापेक्षया उत्कृष्टवस्त्वन्तरनिषेधकवाक्यघटितनिकृष्टरुद्रपरस्थाणुपदघटित-द्रोणपर्वान्त्याध्यायोपान्त्याध्यायग्रन्थस्यात्यन्तविरुद्धार्थतयानादरणीयत्वं प्रक्षिप्तत्वं वा वक्तव्यम् । किं च प्रक्षिप्तत्वमन्त्याध्यायग्रन्थस्यैव कृत्स्नस्य न्याय्यम् । अर्जुनेन व्यासेन च संग्रामदृष्टरुद्रस्य स्वप्नकाले स्वप्नदृङ्मात्रानुभाव्यस्वाप्नि-कार्जुनदृष्टरुद्राभिन्नत्वस्य बाधितत्वेन प्रक्षिप्तत्वयोग्यत्वात् । न हि स्वप्नदृष्टो रथतुरगादिः प्रतिबुद्धेन द्रष्टुं शक्यते । 'बाध्यन्ते चैते रथादयः स्वप्नदृष्टाः प्रबोधे' इति 'वैलक्षण्याच्च न स्वप्नादिवत्' इतिसूत्रभगवत्पादीयतद्भाष्यप्रामा-ण्यात् लोके स्वप्नदृष्टस्य जाग्रति दर्शनाभावाच्च । स्वप्ने यद्यद्दृश्यते तत्सर्वं प्रातिभासिकं मिथ्याभूतमिति शंकरभगवत्पादभाष्ये 'मायामात्रं तु कार्त्स्न्येना-नभिव्यक्तस्वरूपत्वात्' इति सूत्रे स्पष्टं लिखितम् । विशिष्टाद्वैतिश्रीरामानुज-श्रीकण्ठादिभिरपि 'संध्ये सृष्टिराह हि' इत्यधिकरणभाष्ये स्वप्ने दृश्यमानं सर्वं दृष्टनष्टस्वभावं परमात्मनैव सृज्यते न तज्जाग्रत्पदार्थान्तर्गतमिति वर्णितम् । तथैव मध्वभाष्येऽपि वासनाप्रभवं स्वाप्निकं वस्त्विति तदधिकरणे निर्णीतम् । स्वाप्निकस्याभिमन्युवधदिनरात्रावर्जुनसंबन्धिस्वप्नकाले कैलासशिखरे तेन दृष्टस्य 'योगिनां परमं ब्रह्म व्यक्तं वेदविदां निधिम्' इति स्वप्नाध्याय-गतवचनबोधितपरब्रह्मत्वादिविशिष्टरूपेण परमात्मसृष्टत्वावश्यकतया काल्प-निकपरब्रह्मत्वादिगुणयुक्तकल्पितस्वप्नदृष्टरुद्रस्यार्जुनबोधकाल एव विनष्टत्वेन जाग्रति युद्धकालेऽर्जुनेन पुरोदृष्टत्वमसंभावितमेव । तस्माद्द्रोणपर्वान्त्याध्यायकृत्स्न-ग्रन्थस्य प्रक्षिप्तत्वात्तत्पर्वीयार्जुनस्वप्नाध्यायस्य तत्कालसृष्टरुद्रविषयकत्वेन च ताभ्यां स्वप्नाध्यायान्त्याध्यायाभ्यां रुद्रोत्कर्षप्रतिपादनं शैवानामज्ञानविलसित-मित्यलम् ।

द्रोणपर्वान्त्याध्याये 'यन्निर्दहति यत्तीक्ष्णो यदुग्रो यत्प्रतापवान् । मांस-

शोणितमज्जादो रुद्र इत्युच्यते ततः' इत्यस्ति । भारते आनुशासनिकपर्वण्युपमन्यूपाख्यानं नाम किंचिदस्तीति शैवैरुच्यते । तस्मिन्नुपाख्याने शिवमाराध्य प्रद्युम्नो रुक्मिण्यामुत्पादितः तथा साम्बोऽपि जाम्बवत्यां कृष्णेनोत्पादित इति कथितमस्ति । कृष्णाराध्यश्च शिव उपमन्युनाप्याराधितः । स च शिवो ब्रह्मविष्णुरुद्रापेक्षया तुरीयस्तेषामुत्पादकश्चेति कथितमस्ति; तच्चोपाख्यानं तत्पूर्वोत्तरादिसर्वोपाख्यानेषु भीष्मवक्तृकेषु सत्सु कृष्णवक्तृकमिति च दृश्यते । प्रद्युम्नोत्पत्तेर्द्वादशे वर्षे जाम्बवत्या साम्बोत्पत्त्यर्थं प्रेरितः कृष्णः शिवोपासनार्थमुपमन्योराश्रमं गत्वा उपमन्योः सकाशाच्छिवमाहात्म्यं श्रुतवानिति कथितमस्ति । तदेतदुपमन्यूपाख्यानं प्रक्षिप्तमिति बहवः कथयन्ति । तत्र च हेतूनपि वदन्ति—उपमन्यूपाख्यानस्य महोपाख्यानत्वान्महाभारतमहोपाख्यानसंग्रहकर्तृभिः श्रीविद्यारण्यस्वामिभिरसंगृहीतत्वमेको हेतुः । आन्ध्रभाषामयमहाभारतकर्त्रा तिक्कन्नसोमयाजिनासंगृहीतत्वं द्वितीयः । 'प्रद्युम्नः सूतिकागेहाच्छम्बरेण यदा हृतः । तमेव मासं साम्बोऽपि जाम्बवत्यामजायत' इति हरिवंशवचनविरुद्धोपक्रमकत्वं तृतीयः । 'प्रेहि भीष्मं महाबाहुं वृद्धं कुरुपितामहम् । ज्ञानान्यल्पीभविष्यन्ति भीष्मे लोकान्तरं गते ॥ वेदोक्ताश्चैव ये धर्मा वेदान्तोदिगताश्च ये । तान्सर्वान्संप्रपश्यामि वरदानात्तवाच्युत ॥ यच्च भूतं भविष्यच्च भवं च परमद्युते । तत्सर्वमनुपश्यामि पाणौ फलमिवार्पितम् ॥ यच्च यत्र च वक्तव्यं तद्वक्ष्यामि जनार्दन । तव प्रसादाद्धि शुभा मनो मे बुद्धिराविशत्' इत्यादिशान्तिपर्वगतवचनैर्भीष्मस्य सर्वतत्त्वज्ञत्वं श्रीकृष्णप्रसादात्सम्यग्वेदवेदान्तार्थज्ञातृत्वं भूतभविष्यद्वर्तमानसर्ववस्तुविषयकज्ञानवत्त्वं चावगम्यते । ईदृशस्य भीष्मस्य यथावच्छिवनामाशिवतत्त्वाज्ञातृत्वमवलम्ब्य भीष्मेण नियुक्तः श्रीकृष्णः शिवनामशिवतत्त्वघटितमुपमन्यूपाख्यानमवददिति उपमन्यूपाख्यानोपक्रमवचनं विरुद्धत्वेनावभासमानं चतुर्थो हेतुः । यदि शिवतत्त्वादिकं यथावद्भीष्मेणाज्ञातं तर्हि शिवतत्त्वं वेदवेदान्तबहिर्भूतमेव स्यात् । अनुपदोक्तवचने वेदवेदान्तार्थस्य कृत्स्नस्य श्रीकृष्णप्रसादाद्भीष्मेण सम्यग्विदितत्वोक्तेः वेदवेदान्तार्थप्रवचने सम्यङ्नियु-

त्केन भीष्मेणोपमन्यूपाख्यानस्य पूर्वोत्तरोपाख्यानसर्वप्रवक्त्रा उपमन्यूपाख्यानस्या-कथितत्वं पञ्चमः । उपमन्यूपाख्याने पुत्रार्थं कृष्णेनाराधितत्वेन कथितस्य शिवस्य तुरीयस्य त्रिमूर्त्युत्पादकस्य शान्तिपर्वणि मोक्षधर्मे नारायणीये एकचत्वारिंशदधिकत्रिशततमाध्याये 'ततो ब्रह्मा समभवत्स तस्यैव प्रसा-दजः । अह्नः क्षये ललाटाच्च सुतो देवस्य वै तथा ॥ क्रोधाविष्टस्य संजज्ञे रुद्रः संहारकारकः' इति भगवत्क्रोधजन्यं रुद्रं प्रकृत्य 'इति संचिन्त्य मनसा पुराहं रुद्रमीश्वरम् । पुत्रार्थमाराधितवानहमात्मानमात्मना' इति भगव-त्क्रोधजन्यरुद्रे पुत्रार्थं कृष्णाराधितत्वोक्तिविरुद्धत्वं षष्ठो हेतुः । शशशृङ्गायमाण-तुरीयरुद्रविषयकत्वमुपमन्यूपाख्यानस्य प्रक्षिप्तत्वे सप्तमो हेतुः । किं च उपमन्यू-पाख्याने चतुर्दशाध्याये एकन्यूनचतुःशततमे श्लोके उक्तोपमन्यूपाख्यानान्तर्गत-शिवनामाष्टोत्तरसहस्रगत-'स्थिरः स्थाणुः'-इति प्रथमश्लोके च उक्तोपाख्यान-प्रतिपाद्यरुद्रे स्थाणुत्वोक्त्या तस्य विष्णुक्रोधजन्यत्वब्रह्मपुत्रत्वाद्यावश्यिकतया तस्य विष्ण्वादिजनकत्वमूलविष्ण्वाराध्यत्वादिप्रतिपादकश्लोकानां ग्रावाणः प्लवन्त इतिवदसदर्थवादत्वावश्यिकतया तदुपाख्यानस्याप्रक्षिप्तत्वाग्रहेऽपि न तेन शिवो-त्कर्षसिद्धिः । विष्णुनामसहस्रे 'विश्वं विष्णुः' इति द्वितीयस्य विष्णुरिति नाम्नो विष्ण्वसाधारणत्ववत् स्थिरः स्थाणुरित्युपमन्यूपाख्यानान्तर्गताष्टोत्तरसहस्रपतितस्था-णुरितिनाम्नः द्वितीयत्वाविशेषाच्छिवासाधारणनामत्वावश्यिकतया तदुपाख्यानतद्गत-नामसहस्रप्रतिपाद्यरुद्रस्य स्थाणुशब्दमुख्यार्थत्वमेवोचितं न तु गौणत्वम् । एवं तदु-पाख्याने 'पश्य लिङ्गं भगाङ्कितम् । लिङ्गाङ्काश्च भगाङ्काश्च तस्मान्माहेश्वराः प्रजाः' इति शिवस्य लिङ्गभगाङ्कत्वमुक्तम् । लिङ्गस्य भगवेष्टितत्वोक्तिः सर्व-जन्तुसाधारणस्य लिङ्गस्य भगस्य च शिवासाधारणत्वोक्तिश्चासंगता जुगुप्सिता च । शूलाङ्कत्वं तु तस्य वक्तव्यम् 'न वज्राङ्का न पद्माङ्का न चक्राङ्का यतः प्रजाः' इति समभिव्याहृतश्लोकपर्यालोचनया उचितत्वात् । तथा च लिङ्गभगा-ङ्कत्वबोधकश्लोकानां तदुपाख्यानगतानां यथासदर्थत्वं तथा शिवस्य विष्ण्वादिज-नकत्वबोधकतदुपाख्यानगतवचनानामपि भारतप्रदेशान्तराविरुद्धतयासदर्थवादत्वमेव

शुक्तमित्युत्पश्यामः। किं च मोक्षधर्मे पञ्चाशीत्यधिकद्विशततमाध्याये शिवनामसहस्रं वदेति युधिष्ठिरपृष्टभीष्माच्छिवस्थिरस्थाण्वादिनामघटितनामसहस्रस्य युधिष्ठिरेण श्रुततया प्रायेण तन्नामघटितनामसहस्रस्योपमन्यूपाख्यानोपक्रमे युधिष्ठिरेण पुनः प्रश्नानुपपत्तिः। मोक्षधर्मे स्थिरस्थाण्वादिनामघटितनामसहस्रमुक्तवतो भीष्मस्योपमन्यूपाख्यानोपक्रमे युधिष्ठिरं प्रति शिवनामतद्वादितगुणाज्ञानोक्तिश्च प्रक्षिप्तत्वे हेतुद्वयम्। एवमुपमन्यूपाख्यानस्य कुदृष्टिप्रक्षिप्तत्वे बहवो हेतवः सन्तीत्यलम्।

तस्माद्भारतरीत्या स्थाणुत्वद्रुहिणपुत्रत्वविष्णुक्रोधप्रभवत्वादिधर्मरहितः शिवो नास्तीति निष्प्रत्यूहम्। भारते सभापर्वणि अष्टमाध्याये यमसभावर्णने 'रामो दाशरथिश्चैव लक्ष्मणश्च प्रतर्दनः। जामदग्न्योऽथ रामश्च नाभागसगरौ तथा' इत्यादिना यमसभायां यमोपासकानां मध्ये दाशरथिरामस्यापि गणनाद्याम्यपुण्यभोगार्थमेव यमसभायां रामावस्थानम्। अतो रामस्य पुण्यकृतामिव मरणानन्तरं याम्यपुण्यभोगार्थं यमसभावर्तनमिति कश्चिदाह। स वक्तव्यः—याम्यभोगस्य शरीरत्यागानन्तरभावितया भूम्यां यस्मिञ्शरीरेऽवस्थितिः तच्छरीरं त्यक्त्वैव शरीरान्तरेण याम्यभोगोऽनुभोक्तव्य इति सर्वसंप्रतिपन्नम्। रामस्य पूर्वशरीरत्यागो रामायणभारतयोर्न श्रूयते। श्रीरामायणे उत्तरकाण्डेऽन्त्यसर्गे 'विवेश वैष्णवं तेजः सशरीरः सहानुजः' इति शरीरेण सहैव वैष्णवतेजःप्रवेशः कथितः। तदनुसारेण दाक्षिणात्यतालपत्रात्मकभारतकोशे आरण्यपर्वणि पुलस्त्यतीर्थयात्रायाम् 'गोप्रतारं ततो गच्छेत्सरय्वास्तीर्थमुत्तमम्। यत्र रामो गतः स्वर्गं सभृत्यबलवाहनः॥ सशरीरो दिवं यातस्तस्य तीर्थस्य तेजसा। रामस्य च प्रसादेन व्यवसायेन चानघ॥ तस्मिंस्तीर्थे नरः स्नात्वा गोप्रतारे नराधिप। सर्वपापविशुद्धात्मा विष्णुलोके महीयते' इत्यादिना रामस्य स्वशरीरेण स्वर्गगमनमुक्तम्। तथा च पूर्वशरीरविशिष्टस्य कथं यमाधीनयाम्यपुण्यभोगप्रसक्तिः। अत एवेदानीमपि वर्तमानस्य परशुरामस्य चिरजीविनो जामदग्न्यस्य यमसभायामवस्थानोक्तिरपि संगच्छते। अन्यथा यमोपासनार्थमेव यमादिष्टभोग्यभोगार्थमेव वा यमसभायां रामावस्थानाभ्युपगमे सभापर्वण्येव दशमाध्याये कुबेरसभावर्णने 'उपासते

महात्मानं तस्यां धनदमीश्वरम्' इत्यारभ्य 'भगवान्भूतसंघैश्च वृतः शतसहस्रशः । उमापतिः पशुपतिः शूलभृद्भगनेत्रहा ॥ मेदोमांसाशनैरुग्रैरुग्रधन्वा महाबलः' इत्यादिना, तत्रैव सप्तमाध्याये इन्द्रसभायामिन्द्रोपासकमध्ये 'मेधातिथिर्वामदेवः पुलस्त्यः पुलहः क्रतुः । मरुत्तश्च मरीचिश्च स्थाणुश्चात्र महातपाः' इत्यादिना शिवस्यापि परिगणनात्कुबेरेन्द्रोपासकत्वतदधीनत्वतदादिष्टपुण्यभोग्यफलभोक्तृत्वादेर्दुष्परिहरत्वापत्तेः । यमलोक इवेन्द्रादिलोकेऽपि पुण्यफलभोगार्थमेव येषामवस्थानं कथितं तेषां मध्ये शिवस्याप्यवस्थानमुक्तं दृश्यते । मरणेन पूर्वशरीरं त्यक्त्वा शिवस्येन्द्रकुबेरादिसभागमनानुक्त्या न पुण्यफलभोगार्थं तत्सभागमनमिति चेत्, रामस्यापि तथैवेति संतोष्टव्यम् । किं च आश्रमवासिकपर्वणि षड्विंशाध्याये दाक्षिणात्यकोशे 'भो भो राजन्न दग्धव्यमेतद्विदुरसंज्ञकम् । कलेबरमिहैवं ते धर्म एष सनातनः ॥ लोकाः सांतानिका नाम भविष्यन्त्यस्य भारत । यतिधर्ममवाप्तोऽसौ नैष शोच्यः परंतप' इति युधिष्ठिरं प्रत्यशरीरवाग्भिर्विदुरस्य भाविसांतानिकलोकप्राप्तिफलमुक्तम् । सांतानिकलोकश्च श्रीमदुत्तररामायणे— 'यच्च तिर्यग्गतं किंचिद्राममेवानुचिन्तयत् । प्राणांस्त्यक्ष्यति वै भक्त्या तत्संताने निवत्स्यति' इति रामोपासकस्य सांतानिकलोकोक्त्या विदुरो रामभक्त इत्यवगम्यते । विदुरश्च 'माण्डव्यशापाद्धि स वै धर्मो विदुरतां गतः' इत्याश्रमवासिकपर्वाष्टाविंशत्यध्यायव्यासवचनाद्यमधर्मराज इति स्पष्टम् । तथा च यमस्य रामोपासकत्वात्स्वोपास्यदाशरथिरामस्य स्वोपास्यत्वार्थं यमेन प्रार्थितो दाशरथिरामो यमसभायां वर्तते, कुबेरप्रार्थितो रुद्रः कुबेरसभायामिवेति सर्वं समञ्जसम् । रामस्य याम्यभोगार्थं यमसभावर्तनं वदतः परं याम्ययातनानुभव आचन्द्रतारकं भवेदेवेति निश्चयः ।

महाभारतस्य विष्णुसर्वोत्कर्ष एव परमतात्पर्यम् । उपक्रमे 'आद्यं पुरुषमीशानं पुरुहूतं पुरुष्टुतम् । ऋतमेकाक्षरं ब्रह्म व्यक्ताव्यक्तं सनातनम् । परावराणां स्रष्टारं पुराणं परमव्ययम् । मङ्गल्यं मङ्गलं विष्णुं वरेण्यमनघं शुचिम्' इति ब्रह्मत्वजगत्स्रष्टृत्वनिरतिशयमङ्गलरूपत्वादीनां विष्णौ कथनात्, उपसंहारे

'कीर्तिं प्रथयता तेन पाण्डवानां महात्मनाम् । क्रीडां च वासुदेवस्य देवदेवस्य चक्रिणः ॥ यस्तु नारायणो नाम देवदेवः सनातनः' इति भगवत्कर्मणः कृत्स्नस्य क्रीडात्वोक्तेः नारायणस्य देवदेवत्वसनातनत्वोक्तेश्च । मध्ये भारतसारभूतायां गीतायाम् 'परं ब्रह्म परं धाम पवित्रं परमं भवान् । पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा । असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥ अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा । मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ॥ जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः । त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन' इत्यादिभिर्भगवतो नारायणस्य कृष्णस्य परब्रह्मत्वपरधामत्वनारदादिसकलर्षिवेद्यपरतत्त्वरूपत्वकृत्स्नजगत्प्रभवाप्ययस्थानत्वभगवद्व्यतिरिक्तोत्तमरहितत्वमोक्षहेतुज्ञानविषयदिव्यजन्मकर्मत्वादीनामनितरसाधारणानां कथनात् । महाभारते सहस्रनामाध्याये 'परमं यो महद्ब्रह्म' इत्यादिना 'जगन्नाथस्य भूपतेर्विष्णोः' इत्यन्तेन परब्रह्मत्वपरायणत्वनिरतिशयमङ्गलत्वनिरतिशयपवित्रत्वादीनाम् 'यतो वा इमानि भूतानि जायन्ते' 'जन्माद्यस्य यतः' इति श्रुतिसूत्रोक्तस्य सर्वजगदुत्पत्तिहेतुत्वप्रलयहेतुत्वादेश्च ब्रह्मासाधारणलक्षणस्योक्तेः 'ऋषयः पितरो देवा महाभूतानि धातवः । जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ॥ योगो ज्ञानं तथा सांख्यं विद्याः शिल्पादिकर्म च । वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात्' इति ऋषिपितृदेवमहाभूतजङ्गमाजङ्गमवेदशास्त्रादिकृत्स्नहेतुत्वस्य परब्रह्मलक्षणस्य नारायणे कथनाच्च । एतेन विष्णोरवान्तरकल्पे तत्कल्पीयपदार्थमात्रस्रष्टृत्वं न तु कृत्स्नजगत्कारणत्वम् । न ह्यादिकल्पे जगत्स्रष्टृत्वं येन विष्णोः परब्रह्मत्वं भवेदिति शङ्का परास्ता । 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' इति गीतावचनेन 'यतः सर्वाणि भूतानि भवन्त्यादियुगागमे' इति सहस्रनामाध्यायगतवचनेन कृत्स्नजगत्प्रभवहेतुत्वादियुगीयपदार्थस्रष्टृत्वयोर्भगवति प्रतिपादनादित्यलम् ।

आश्वमेधीयानुगीता अर्जुनं प्रति भगवतोक्ता । सा भीष्मपर्वीयभगवद्गीता-

व्याख्या । अतो गीतार्थोऽनुगीतानुरोधेन नेय इति कश्चित्प्रललाप । तन्न । अनुगीताप्रथमाध्याये 'विदितं मे महाबाहो संग्रामे समुपस्थिते । माहात्म्यं देवकीपुत्र तच्च ते रूपमैश्वरम् ॥ यत्तु तद्भवता प्रोक्तं तदा केशव सौहृदात् । तत्सर्वं पुरुषव्याघ्र नष्टं मे व्यग्रचेतसः' इत्यनेनार्जुनस्य गीतायां भगवता कथितं शिवविरिञ्चादिभ्य आत्मभ्यो महत्त्वविशिष्टात्मत्वरूपं माहात्म्यं विदितं न तु विस्मृतम् । यत्तु सौहार्दमात्रनिमित्तकमुक्तं तद्विस्मृतमित्युक्तमित्यवसीयते । तेन च भगवतः सर्वोत्कृष्टत्वबोधकगीताश्लोकविषये अनुगीताया न व्याख्यानत्वम्, तदर्थस्य विदितत्वोक्त्यार्जुनेनापृष्टत्वात् । यत्तु विस्मृतं तस्य पुनर्वक्तव्यत्वेन तद्विषये प्रश्नो वक्तव्यः । तद्विषयेऽपि व्याख्यात्वं न युज्यते 'न च साद्य पुनर्भूयः स्मृतिर्मे संभविष्यति । न शक्यं तन्मया भूयस्तथा वक्तुमशेषतः ॥ परं हि ब्रह्म कथितं योगयुक्तेन तन्मया' इति भगवत्प्रतिवचनेन गीता सावधानमनसा कथिता, अनुगीता तु न तथेत्यवगमेन तयोर्व्याख्येयव्याख्यानत्वस्य सुदूरपराहतत्वावगमात् अनुगीतानुरोधेन गीतानयनं मूर्खबुद्ध्यनुरोधेन पण्डितबुद्धिनयनतुल्यम् । तस्माद्भगवद्गीताविरोधे कूर्मपुराणीयेश्वरगीतावदनुगीतान्यथानेयैव, मनोवधानं विनैवानुगीताया भगवता कथितत्वादित्यलम् ॥

केचित्तु रावणवधजनितपापनिवृत्त्यर्थं रामेण रामेश्वराख्यलिङ्गप्रतिष्ठापनं सेतुमध्ये कृतमिति वदन्तः कुत्रापि पुराणे असुरराक्षसादिवधजनितपापक्षयार्थं शिवेन प्रायश्चित्तरूपतया किंचित्कर्म कृतमित्यनुक्त्या शिवापेक्षया विष्णोरपकर्ष इति वदन्ति । अपरे तु प्रायश्चित्तहेमाद्रावुत्तरभागे कृच्छ्रनिरूपणप्रकरणे देवलः— कृच्छ्रं माहेश्वरं नाम सर्वपापप्रणाशनम् । पुरा कंदर्पहननान्महादोषः समुत्थितः ॥ तद्दोषपरिहारार्थं ब्रह्माणं पर्यपृच्छत । पञ्चबाणस्य हननान्महान्दोषोऽप्यमुत्थितः ॥ तद्दोषपरिहारार्थं निष्कृतिर्देव कथ्यताम् ॥ ब्रह्मा— प्रातः स्नात्वा यथान्यायं दन्तधावनपूर्वकम् । शुद्धवस्त्रमलंकृत्य पुण्ड्रधारणपूर्वकम् ॥ नित्यकर्म समाप्यादौ संकल्पं पूर्वमाचरेत् । तावन्नारायणं देवं स्मृत्वा पापविमोचनम् ॥

यदा मन्दायते भानुस्तदा कापालमुद्वहन् । श्रोत्रियाणां च विप्राणां गृहेषु त्रिषु
संख्यया ॥ शाकं भैक्षं फलं वापि यथासंभवमादरात् । आनयित्वाथ देवाय
समर्प्य विधिपूर्वकम् ॥ भक्षयेत्तानि सर्वाणि वाग्यतोऽन्नमकुत्सयन् । हस्तौ
पादौ च प्रक्षाल्य द्विराचम्य ततः परम् ॥ सायंकाले स्वपेद्देवसमीपे नियतो
वसन् । परेद्युः प्रातरुत्थाय पूर्ववत्सर्वमाचरेत् ॥ गौरेका द्विजवर्याय देया कर्म-
फलाप्तये । पञ्चगव्यं पिबेत्पश्चात्कृच्छ्रं माहेश्वरं त्विदम् ॥ कुरु त्वमेवं भगवन्सर्व-
पापविशुद्धये । एवं श्रुत्वा तदा देवो महेशानस्तथाकरोत्' इति ग्रन्थेन मन्मथहन-
नजनितपापप्रायश्चित्तं नारायणाराधनात्मकं माहेश्वरकृच्छ्रं शिवेनानुष्ठित-
मिति हेमाद्रिमहानिबन्धनकारधृतदेवलस्मृतिवचनेन कथितमस्ति । न ह्येवं
विष्णुना प्रायश्चित्तं पापक्षयार्थं कृतमिति महानिबन्धनकारधृतस्मृतिवचनेन
कथितं दृश्यते । पुराणवचनं त्वविश्वसनीयम् । तस्माच्छिवापेक्षया विष्णुरेवो-
त्कृष्ट इति प्राहुः । अन्ये तु यक्षानुरूपबलिन्यायेन पुराणे विष्णुना पाप-
क्षयार्थं लिङ्गस्थापनं प्रायश्चित्तं कृतमित्यस्य प्रातिभट्येन पुराण एव शिवेन
प्रायश्चित्तं कृतमिति वक्तव्यमिति मन्वानाः पौराणं प्रायश्चित्तादिकं शिवस्य
कथयन्ति । तथा हि— वराहपुराणे मुद्रिते षट्त्रिंशदधिकशततमाध्याये
'वराहमूर्तिर्भगवानुवाच' इत्यारभ्य प्रवृत्ते ग्रन्थे 'शिवः— तव
भूमिं प्रति
विष्णोः प्रसादेन मया तत्त्रिपुरं हतम् । निहता दानवास्तत्र गर्भिण्यश्च निपा-
तिताः ॥ ३३ ॥ बालवृद्धा हतास्तत्र विस्फुरन्तो दिशो दश । तस्य पापस्य
दोषेण न शक्नोमि विचेष्टितुम् ॥ ३४ ॥ प्रणष्टयोगमायश्च नष्टैश्वर्यश्च
संप्रति ॥ ३५ ॥ विष्णो
माधव । किं कर्तव्यं मया विष्णो पापावस्थेन संप्रति ॥ ३५ ॥ विष्णो
तत्त्वेन मे ब्रूहि शोधनं पापनाशनम् । येन वै कृतमात्रेण शुद्धो मुच्येत
किल्बिषात् ॥ ३६ ॥ एवं चिन्तात्मनस्तस्य मया रुद्रस्य भाषितम् । कपाल-
मालां गृहीत्वा शमलं गच्छ शंकर ॥ ३७ ॥ ममैवं वचनं श्रुत्वा भगवा-
न्परमेश्वरः । उवाच मां पुनर्व्यक्तं मां बोधय जगत्पते ॥ ३८ ॥ कीदृशः
शमलो विष्णो यत्र गच्छामहे वयम् । ततस्तस्य वचः श्रुत्वा शंकरस्य महे-

श्वरि ॥ ३९ ॥ तत्पापशोधनार्थाय मया वाक्यं प्रभाषितम् । श्मशानं शमलं रुद्र पूतिको व्रणगन्धिकः । स्वयं तिष्ठन्ति वै तत्र मनुजा विगतस्पृहाः ॥ ४० ॥ तत्र गृह्य कपालानि रम तत्रैव शंकर । तत्र वर्षसहस्राणि दिव्यान्येव दृढव्रतः ॥ ४१ ॥ ततो भक्षय मांसानि पापक्षयचिकीर्षुकः । हतानां चैव मांसानि ये च भोज्यास्तव प्रियाः ॥ ४२ ॥ एवं सर्वैर्गणैः सार्धं वस तत्र सुनिश्चितः । पूर्णे वर्षसहस्रे तु स्थित्वा त्वं शमले पुनः ॥ ४३ ॥ गच्छाश्रमपदं पश्चाद्गौतमस्य महामुनेः । तत्र ज्ञास्यसि चात्मानं गौतमाश्रमसंस्थितः ॥ ४४ ॥ प्रसादाद्गौतममुनेर्भविता गतकिल्बिषः । सततं पापसंपन्नं कपालं शिरसि स्थितम् । ऋषिः पातयितुं शक्तो मत्प्रसादान्न संशयः ॥ ४५ ॥ एवं रुद्रे वरं दत्त्वा तत्रैवान्तर्हितोऽभवम् । रुद्रोऽपि भ्रमते तत्र श्मशाने पापसंवृते ॥ ४६ ॥ अतो न रोचते भूमे श्मशानं मे कदाचन । यत्र रुद्रकृतं पापं स्थितं किल भयावहम् ॥ ४७ ॥ एतत्ते कथितं भद्रे श्मशानं मे जुगुप्सितम्' इत्यादिना शिवेनापि त्रिपुरासुरादिवधप्रायश्चित्तमनुष्ठितमित्यवगम्यते । तस्मिन्नेव मुद्रिते वराहपुराणे सप्तनवतितमाध्याये— 'ब्रह्मणा तु यदा सृष्टः पूर्वं रुद्रो वरानने । तृतीये जन्मनि विभुः पिङ्गाक्षो नीललोहितः ॥ तदा कौतूहलाद्ब्रह्मा स्कन्धे तं जगृहे प्रभुः । स्कन्धारूढस्तदा रुद्रो ब्रह्मणोऽव्यक्तजन्मनः ॥ जन्मतश्च शिरो यद्धि पञ्चमं तज्जहार ह । तस्मिन्निकृत्ते शिरसि प्राजापत्ये त्रिलोचनः ॥ ब्रह्माणं प्रयतो भूत्वा रुद्रो वचनमब्रवीत् ॥ रुद्र उवाच— कथं कपालं मे देव करात्पतति सुव्रत । नश्यते च कथं पापं ममैतद्वद सुव्रत ॥ ब्रह्मोवाच— इदमेव व्रतं देव चर कापालिकं विभो । समयाचारसंयुक्तं कृत्वा स्वेनैव तेजसा ॥ एवमुक्तस्तदा रुद्रो ब्रह्मणाव्यक्तमूर्तिना । आजगाम गिरिं गन्तुं माहेन्द्रं पापनाशनम् ॥ तत्र स्थित्वा महादेवस्तच्छिरो बिभिदे त्रिधा । तस्मिन्भिन्ने पृथक्केशान्गृहीत्वा भगवान्भवः ॥ यज्ञोपवीतं केशं तु महास्थ्नाक्षमणींस्तथा । कपालशकलं चैकमसृक्पूर्णं करे स्थितम् ॥ अपरं खण्डशः कृत्वा जटाजूटे न्यवेशयत् । एवं कृत्वा महादेवो

बभ्रामेमां वसुंधराम् ॥ सप्तद्वीपावतीं पुण्यां मज्जंस्तीर्थेषु नित्यशः । समुद्रे प्रथमं स्नात्वा ततो गङ्गां व्यगाहत ॥ सरस्वतीं ततो गत्वा यमुनासंगमं ततः । शतद्रुं च ततो गत्वा देविकां च महानदीम् ॥ वितस्तां चन्द्रभागां च गोमतीं सिन्धुमेव च । तुङ्गभद्रां तथा गोदामुत्तरे गण्डकीं तथा ॥ नेपालं च ततो गत्वा ततो रुद्रमहालयम् । ततो दारुवनं गत्वा केदारगमनं पुनः ॥ भद्रेश्वरं ततो गत्वा गयां पुण्यामथागमत् । तत्र फल्गुकृतस्नानः पितॄन्संतर्प्य यत्नतः ॥ एवं वेगेन सकलं ब्रह्माण्डं भूतधारिणि । बभ्राम सर्वदेवेशः षष्ठेऽब्दे तस्य चापतत् ॥ परिधानं तु कौपीनं नग्नः कापालिकोऽभवत् । पुनरब्दद्वयं भ्रान्तस्तीर्थे तीर्थे हरः स्वयम् ॥ कपालं त्यक्तुकामस्य तद्धस्तात्तत्तु नापतत् । ततोऽब्दमेकं बभ्राम हिमवत्पर्वते शुभे ॥ गत्वा हरिहरक्षेत्रं स्नात्वा देवाङ्गदे तथा । सोमेश्वरं समभ्यर्च्यागतोऽसौ चक्रतीर्थकम् ॥ तत्र स्नात्वा तथा नत्वा त्रिजलेश्वरसंज्ञितम् । अयोध्यायां तथा गत्वा वाराणस्यां ततोऽगमत् ॥ द्वादशाब्दैर्गतवतः सीमाचारिगणैस्तथा । बलात्कारेण तद्धस्तात्कपालं पातितं भुवि ॥ कपालमोचनं तीर्थं ततो जातं मलापहम् । गङ्गाम्भासि ततः स्नात्वा विश्वेशं पूज्य भक्तितः ॥ रुद्रो विशुद्धिमापन्नो मुक्तः स ब्रह्महत्यया । कपालमोचनं नाम तीर्थं त्रैलोक्यविश्रुतम् ॥ यत्राप्लुतो नरो भक्त्या ब्रह्महा तु विशुध्यति । कपालं पतितं दृष्ट्वा रुद्रहस्ताच्चतुर्मुखः ॥ आगतो देवसहितो वाक्यं चेदमुवाच ह ॥ ब्रह्मोवाच— भव रुद्र विरूपाक्ष लोकमार्गव्यवस्थितः । व्रतानि कुरुते देव त्वत्कृतानि हि पुत्रक ॥ स त्वत्प्रसादाद्देवेश ब्रह्महापि विशुध्यति । यद्धृतं नग्नकापालं यद्भ्रान्तं यत्त्वया कृतम् ॥ यत्कृतं शुद्धशैवं च तत्तन्नाम्ना भविष्यति । मां पुरस्कृत्य देवस्त्वं पूज्यसे यैर्विधानतः ॥ तेषां शास्त्राणि सर्वाणि शास्त्रं पाशुपतं तथा । कथयस्व महादेव सविधानं समासतः ॥ एवमुक्तस्ततो रुद्रो ब्रह्मणा व्यक्तमूर्तिना । देवैर्जयेति संतुष्टः कैलासनिलयं ययौ ॥ ब्रह्मा चापि सुरैः सार्धं गतः स्वर्लोकमुत्तमम् । देवा अपि ययुः स्वर्गं स्वस्थानं च यथागतम् ॥ एतद्रुद्रस्य माहात्म्यं मया ते परिकीर्ति-

तम् । चरितं यच्च देवस्य वित्तं समभवद्भुवि' इत्यादिना शिवेनापि ब्रह्मशिरश्छेदप्रयुक्तब्रह्महत्याया मन्वाद्युक्तकपालधारणपूर्वकद्वादशवार्षिकप्रायश्चित्तं कृतमित्यवगम्यते । एवं श्रीभागवते तृतीयस्कन्धे कपिलदेवहूतिसंवादे 'यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्नि विधृतेन शिवः शिवोऽभूत् । ध्यातुर्मनःशमलशैलनिसृष्टवज्रं ध्यायेच्चिरं भगवतश्चरणारविन्दम्' इति कपिलदेववचनेन श्रीभगवच्चरणारविन्दशौचजलेन मूर्ध्ना धृतेन मङ्गलकरत्वमुक्तं शिवस्येति प्रतीयते । तत्रैव दशमस्कन्धे 'यत्पादपङ्कजरजःस्नपनं महान्तो वाञ्छन्त्युमापतिरिवात्मतमोपहत्यै ! यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादं जह्यां ह्यसून्व्रतकृशा शतजन्मभिः स्याम्' इति रुक्मिणीपत्रिकाश्लोकेन हरिचरणारविन्दरजोभिषेकेणात्मतमोपहननं रुद्रेण संपादितमिति कथितम् । एवं स्वनाशहेतुभूतं वरमित्यज्ञात्वा स्वदत्तवरेण स्वनाशमभिलक्ष्य परिभ्रमतो रुद्रस्य श्रीवैकुण्ठगतस्य रुद्रप्राणसंरक्षणं श्रीभगवता कृतमिति भागवते प्रतिपादितम्— 'श्रीशुक उवाच— शापप्रसादयोरीशा ब्रह्मविष्णुशिवादयः । सद्यःशापप्रसादोऽङ्ग शिवो ब्रह्मा न चाच्युतः ॥ अत्र चोदाहरन्तीममितिहासं पुरातनम् । वृकासुराय गिरिशो वरं दत्त्वाप संकटम् ॥ वृको नामासुरः पुत्रः शकुनेः पथि नारदम् । दृष्ट्वाशुतोषं पप्रच्छ देवेषु त्रिषु दुर्मतिः ॥ स आह देवं गिरिशमुपधावाशु सिध्यति । योऽल्पाभ्यां गुणदोषाभ्यामाशु तुष्यति कुप्यति ॥ दशास्यबाणयोस्तुष्टः स्तुवतोर्बन्दिनोरिव । ऐश्वर्यमतुलं दत्त्वा तत आप सुसंकटम् ॥ इत्यादिष्टस्तमसुर उपाधावत्स्वगात्रतः । केदार आत्मक्रव्येण जुह्वानोऽग्निमुखं हरम् ॥ देवोपलब्धिमप्राप्य निर्वेदात्सप्तमेऽहनि । शिरोऽवृश्चत्स्वधितिना तत्तीर्थक्लिन्नमूर्धजम् ॥ तदा महाकारुणिकः स धूर्जटिर्यथा वयं चाग्निरिवोत्थितोऽनलात् । निगृह्य दोर्भ्यां भुजयोर्न्यवारयत्तत्स्पर्शनाद्भूय उपस्कृताकृतिः ॥ तमाह चाङ्गालमलं वृणीष्व मे यथाभिकामं वितरामि ते वरम् । प्रीये यतो येन नृणां प्रपद्यतामहो त्वयात्मा भृशमर्द्यते वृथा ॥ देवं स वव्रे पापीयान्वरं भूतभयावहम् । यस्य यस्य करं शीर्ष्णि धास्ये स म्रियतामिति ॥ तच्छ्रुत्वा

भगवान्रुद्रो दुर्मना इव भारत । ओमिति प्रहसंस्तस्मै ददेऽहरमृतं यथा ॥ इत्युक्तः सोऽसुरो नूनं गौरीहरणलालसः । स तद्वरपरीक्षार्थं शंभोर्मूर्ध्नि किलासुरः ॥ स्वहस्तं धातुमारेभे सोऽबिभ्यत्स्वकृताच्छिवः । तेनोपसृष्टः संत्रस्तः पराधावत्सवेपथुः ॥ यावदन्तं दिवो भूमेः काष्ठानामुदगादुदक् । अजानन्तः प्रतिविधिं तूष्णीमासन्सुरेश्वराः ॥ ततो वैकुण्ठमगमद्भास्वरं तमसः परम् । यत्र नारायणः साक्षान्न्यासिनां परमा गतिः ॥ शान्तानां न्यस्तदण्डानां यतो नावर्तते गतः । तं तथाव्यसनं दृष्ट्वा भगवान्वृजिनार्दनः ॥ दूरात्प्रत्युदियाद्भूत्वा वटुको योगमायया । मेखलाजिनदण्डाक्षैस्तेजसाग्निरिव ज्वलन् ॥ अभिवादयामास च तं कुशपाणिर्विनीतवत् ॥ श्रीभगवानुवाच— शाकुनेय भवान्व्यक्तं श्रान्तः किं दूरमागतः । क्षणं विश्रम्यतां पुंस आत्मायं सर्वकामधुक् ॥ यदि नः श्रवणायालं युष्मद्व्यवसितं विभो । भण्यतां प्रायशः पुंभिर्धृतैः स्वार्थान्समीहते ॥ श्रीशुक उवाच— एवं भगवता पृष्टो वचसामृतवर्षिणा । गतक्लमोऽब्रवीत्तस्मै यथापूर्व-मनुष्ठितम् ॥ श्रीभगवानुवाच— एवं चेत्तर्हि तद्वाक्यं न वयं श्रद्दधीमहि । यो दक्षशापात्पैशाच्यं प्राप्तः प्रेतपिशाचराट् ॥ यदि वस्तत्र विस्रम्भो दानवेन्द्र जगद्गुरौ । तर्ह्यङ्गाशु स्वशिरसि हस्तं न्यस्य प्रतीयताम् ॥ यद्यसत्यं वचः शंभोः कथंचिद्दानवर्षभ । तदैनं जह्यसद्वाचं न यद्वक्तानृतं पुनः ॥ इत्थं भगवतश्चित्रैर्व-चोभिः स सुपेशलैः । भिन्नधीर्विस्मृतः शीर्ष्णि स्वहस्तं कुमतिर्व्यधात् ॥ अथा-पतद्भिन्नशिरा वज्राहत इव क्षणात् । जयशब्दो नमःशब्दः साधुशब्दोऽभवद्दिवि ॥ मुमुचुः पुष्पवर्षाणि हते पापे वृकासुरे । देवर्षिपितृगन्धर्वा मोचितः संकटाच्छिवः ॥ मुक्तं गिरिशमभ्याह भगवान्पुरुषोत्तमः । अहो देव महादेव पापोऽयं स्वेन पाप्मना ॥ हतः को नु महत्स्वीश जन्तुर्वै कृतकिल्बिषः । क्षेमी स्यात्किमु विश्वेशे कृतागस्को जगद्गुरौ ॥ य एवमव्याकृतशक्त्युदन्वतः परस्य साक्षा-त्परमात्मनो हरेः । गिरित्रमोक्षं कथयेच्छृणोति वा विमुच्यते संसृतिभिस्तथा-रिभिः ॥' इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे रुद्रमोक्षणं नामाष्टाशीतितमोऽध्यायो द्रष्टव्यः । एवं वराहपुराणे षडशीत्यधिकशततमा-

ध्याये— 'शिला द्वादश वै देवि साल्ग्रिामसमुद्भवा । विधिवत्पूजिता येन तस्य पुण्यं वदामि ते ॥ कोटिद्वादशलिङ्गैस्तु पूजितैः स्वर्णपङ्कजैः । यत्स्याद्द्वादशकल्पैस्तु दिनैकेन तु तद्भवेत्' इत्यादिना विष्ण्वर्चनस्य कोट्यंशेनापि शिवार्चनं न तुल्यमित्युक्तम् । वराहपुराणे त्रिसप्ततितमाध्याये— 'एवमुक्तः पुनर्वाक्यमुवाचोमापतिस्तदा । अन्यं देहि वरं देव प्रसिद्धं सर्वजन्तुषु ॥ मर्त्यो भूत्वा भवानेव मामाराधय केशव । मां वहस्व च देवेश वरं मत्तो गृहाण च ॥ येनाहं सर्वदेवानां पूज्यात्पूज्यतरोऽभवम् ॥ विष्णुः— देवकार्यावतारेषु मानुषत्वमुपागतः। त्वामेवाराधयिष्यामि त्वं च मे वरदो भव' इत्यादिना शिवाय स्वदत्तवरपरिपालनार्थं विष्णुनावतारेषु शिवाराधनं शिवाद्वरादिकं च गृहीतमित्युक्तम् । एतदज्ञात्वा भ्रान्ता रामकृष्णादिभिः शिवाराधनतद्वरग्रहणाच्छिवाद्विष्णोरपकर्षं वदन्ति । ब्रह्मसंवत्सरशतादेकाहं शैवमुच्यते । शिवसंवत्सरशतान्निमेषं वैष्णवं विदुः ॥ यदा स विष्णुर्जागर्ति तदेदं चेष्टते जगत् । यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति' इति मात्स्ये । एवं पाद्मोत्तरखण्डे विष्णुः— 'अहमप्यवतारेषु त्वां च रुद्र महाबल । तामसानां मोहनार्थं पूजयामि न संशयः' इति । तत्रैव परनामसहस्रनामाध्याये— 'शंभोः पितामहो ब्रह्मा पिता शक्राद्यधीश्वरः । ब्रह्मकोटिजगत्स्रष्टा शंभुकोटिमहेश्वरः ॥ शिवत्रिशूलविध्वंसी श्रीकण्ठैकवरप्रदः । ब्रह्मचर्मशिरःपट्टो दिक्पालोर्ध्वाङ्गभूषणः ॥ द्वादशार्कशिरोदामा रुद्रशीर्षैकनूपुरः । योगिनीग्रस्तगिरिजात्राता भैरवतर्जकः ॥ गणेशकोटिदर्पघ्नो मेषशंकरवाहनः । बाणबाहुसहस्रच्छित्स्कन्दादिगणकोटिजित् ॥ शिवतीव्रतपोवश्यः पुरा शिववरप्रदः । गिरिकन्याव्रतपतिः स्वांशशंकरपूजकः' इत्यादिना विष्णूत्कर्षः शिवादीनां चापकर्षः स्पष्टं प्रतिपादितः । एवं पाद्मपुराणान्त्याध्याये शिवे सत्त्वगुणपरीक्षार्थं कैलासं गत्वा नन्दिकेश्वरसंनिधौ स्थितो भृगुः देव्या क्रीडति शंकरस्तत्र न गन्तव्यमिति नन्दिकेश्वरेण निवारितः किंचित्कालं स्थित्वा शिवाय शापं दत्तवानिति वर्तते । तत्रत्योऽयं श्लोकः— 'तत्र क्रोधसमाविष्टो भृगुः प्रोवाच शंकरम् । नारीसंगममत्तोऽसौ यस्मान्मामवमन्यते ॥ योनिलिङ्गस्वरूपं वै तस्मादस्य भविष्यति'

इति । श्रीपाञ्चरात्रे— 'चाम्पेयपुष्पसाहस्त्रैरर्चयञ्शंकरो हरिम् । एकदैकप्रसूनार्थं स्वनासामच्छिनत्स्वयम् ॥ दृष्ट्वा तद्भक्तिमतुलां हरिः प्रीतो वरं ददौ । लब्धलिङ्गौ च पूज्यौ च भूयास्तं दम्पती युवाम्' इति । इदं वचनं कूरेशविजयेऽप्युदाहृतम् । अगस्त्यसंहितायाम्—चक्रराजं समाराध्य संहर्ता जगतां स्वयम् । स एव दत्तवाञ्शूलं कृपया सहितो मम ॥ तवैवाज्ञां पुरस्कृत्य चराचरगुरोरहम् । कल्पान्ते संहरिष्यामि तावन्ति च विभागशः' इति । इदं वचनं कूरेशविजयेऽप्युदाहृतम् । गारुडे अष्टनवतितमाध्याये— 'हन्तुमभ्युद्यतं रौद्रं शरभं नरकेसरी । नखैर्विदारयामास हिरण्यकशिपुं यथा' इति । वाराहे— 'निकृत्तबाहूरुशिरा वज्रकल्पमुखैर्नखैः । मेरुपृष्ठे नृसिंहेन शरभः सहसापतत्' इति । कूर्मे— 'करवालेन प्रत्येकं मुखं चञ्चूपुटद्वयम् । व्यदारयन्नृसिंहस्तं हिरण्यकशिपुं यथा ॥ तस्य कङ्कालकेनैव नगाकारेण नारद । जयकेतोर्दण्डमुच्चं चकार नरकेसरी' एतानि वचनानि कूरेशविजयेऽप्युदाहृतानीति ।

'अग्नेरातिथ्यमसि विष्णवे त्वा सोमस्यातिथ्यमसि विष्णवे त्वातिथेरातिथ्यमसि विष्णवे त्वाग्नये त्वा रायस्पोषदाव्ने विष्णवे त्वा श्येनाय त्वा सोमभृते विष्णवे त्वा' इति प्रथमकाण्डे द्वितीयप्रश्नः । 'यावद्भिर्वै राजानुचरैरागच्छति सर्वेभ्यो वै तेभ्य आतिथ्यं क्रियते च्छन्दा्ँसि खलु वै सोमस्य राज्ञोऽनुचराण्यग्नेरातिथ्यमसि विष्णवे त्वेत्याह गायत्रिया एवैतेन करोति सोमस्यातिथ्यमसि विष्णवे त्वेत्याह त्रिष्टुभ एवैतेन करोति अतिथेरातिथ्यमसि विष्णवे त्वेत्याह जगत्या एवैतेन करोत्यग्नये त्वा रायस्पोषदाव्नै विष्णवे त्वेत्याहानुष्टुभ एवैतेन करोति श्येनाय त्वा सोमभृते विष्णवे त्वेत्याह गायत्रिया एवैतेन करोति' इति षष्ठकाण्डे द्वितीयप्रश्नः । ताभ्याम् 'सर्वदेवनमस्कारः केशवं प्रति गच्छति' इतिवत् अग्न्यादिसर्वातिथ्यमग्न्यादिसर्वदेवशेषिणे विष्णवे दीयत इत्युक्त्या सर्वदेवशेषित्वं विष्णोरवगम्यते । अधस्तनसप्तलोकाधोभागे स्थित्वा कूर्मरूपो विष्णुर्महातलादिपृथिव्यन्तं धत्त इति सर्वशास्त्रप्रसिद्धम् । तस्य विष्णोः शिवानलस्तम्भवपुरवयवस्य पृथिव्यधोभागप्रविष्टस्य दर्शनं न जातम् । अद्यापि तत्पादो

विष्णुना मृग्यत इति वचनमत्यन्तबाधितार्थत्वात्तुच्छतममप्रामाणिकं कुदृष्टिप्रक्षिप्तं चेति सुधियो विदांकुर्वन्तु । इदमत्रावधेयम्— 'विष्णुरित्था परममस्य विद्वाञ्जातो बृहन्नभिपाति तृतीयम्' इति श्रुत्या विष्णोर्जननिरुक्तेति तन्न; विष्णुरित्यस्य जात इत्यत्रान्वये व्यवहितान्वयप्रसङ्गात् । स च संभवत्यव्यवहितान्वये अयुक्तः । अस्यार्थः— विष्णुः इत्था एवंगुणविशिष्टः । अस्य विष्णोः परमं पदं विद्वान्पुरुषो बृहज्जातः बृहत्त्वरूपेण जातः सन् तृतीयं स्वर्गस्थानं पाति, इन्द्रभावं प्राप्नोतीति । 'सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः । जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः' इत्यत्र उतशब्दस्याप्यर्थतायाः भाष्यकारादिभिरुक्तत्वात् अप्यर्थे उतपदस्य 'उतैनं गोपाः' इत्यादौ प्रयोगप्राचुर्याच्च । तथा च सोमः विष्णोरपि जनिता किमुत मर्त्यादीनामिति विष्णुजननविषये अर्थवादत्वं प्रतीयते । तेन विष्णोर्जनिर्नास्त्येवेति सिध्यति । 'विष्णुर्वा अकामयत पुण्यं श्लोकं शृणवानीति, न मा पापिनी कीर्तिः स्पृशेत्, विष्णुक्रमान्क्रमते विष्णुरेव भूत्वा इमाल्लोँकानभिजयति' इत्यादीनां नक्षत्रेष्टिविष्णुक्रमाद्यर्थवादगतानां स्तुतित्वेन न तैर्विष्णोः कर्माधीनैश्वर्यम् । अन्यथा 'ब्रह्म वा अकामयत' इत्यादिना नक्षत्रेष्ट्यर्थवादेन परब्रह्मणोऽपि कर्माधीनैश्वर्यापत्तेः । यत्तु 'प्रभुर्जयो द्यामङ्गिरसो ययुः' इत्यत्र पाककर्मणः भ्रस्जिधातोः प्रभुर्जय इति रूपं देवोद्देशेन प्रकर्षेण हविःपाकं कृतवन्त इति तदर्थ इति । 'सोमः पवते' इत्यत्र उमया सहितः सोम इति विग्रहेण शिव इत्यर्थ इति कश्चित् । तन्न; अनाघ्रातपदाध्ययनत्वात् । प्रभूर्जय इति सोमः पवत इति पदाध्ययनदर्शनात् । त्वत्पक्षे प्रभूजय इत्यापत्तेः स उ मेत्यापत्तेश्च । 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः' इति 'अजात इत्येव कश्चिद्भीरुः प्रपद्यते रुद्र यत्ते दक्षिणं मुखं तेन मा पाहि' इति वाक्यद्वयमर्थवादत्वान्न प्रतीयमानार्थपरम् । नम इति शब्दरूपार्थवादलिङ्गात्, पाहीति प्रार्थनारूपार्थवादलिङ्गाच्च । यत्तु 'अग्निर्वै देवानामवमो विष्णुः परमः तदन्तरा वै सर्वा देवताः' इत्यत्राग्नेः यत्किंचिद्देवापेक्षया-

वमत्वं न सर्वदेवापेक्षया । 'राजानौ देवानामग्नीषोमौ' इति शतपथश्रुतिविरोधापत्तेः । तत्समभिव्याहाराद्देवापेक्षया विष्णोः परमत्वमपि यत्किंचिद्देवापेक्षया न शिवाद्यपेक्षयेति शिवतत्त्वविवेकोक्तमसत् । 'विष्णुः परमः' 'तदन्तरा वै सर्वा देवताः' इति श्रुतिवाक्याभ्यां प्रबलप्रमाणाभ्यां विष्णोः शिवादिसर्वदेवोत्तमत्वसिद्धौ दुर्बलप्रमाणरूपसंनिधानात्तस्यापेक्षिकपरत्वोक्तेरमीमांसककृत्यत्वात् । श्रुतिलिङ्गसूत्रं जैमिनीयं पश्यतु भवान् ।

यत्तु 'अग्निर्वै देवानाम्' इति वाक्यमग्नीषोमपुरोडाशार्थवाद इति, तन्न; अस्य ऋग्वेदब्राह्मणीयप्रथमवाक्यस्य यथा विधायकप्रत्ययाघटनं तथा तदुत्तराग्नीषोमपुरोडाशवाक्ये तदघटनस्य तुल्यत्वे सति यजुर्वेदसिद्धाग्निसोमपुरोडाशानुवादकतया विधित्वाभावेनाग्निसोमपुरोडाशविधिसमभिव्याहृतत्वाभावेन 'अग्निर्वै' इति वाक्यस्य तदर्थवादत्वाभावात् । विनिगमनाभावेन तस्यैवैतदर्थवादत्वप्रसङ्गाच्च । वस्तुतस्तु तत्त्वमस्यादिवाक्यवदपूर्वार्थतया 'अग्निर्वै देवानामवमो विष्णुः परमः' इत्यस्यापूर्वविधित्वमेव । न हि सर्वदेवापेक्षया परमत्वं वाक्यान्तरेण सिद्धम्, येनोक्तवाक्यस्यानुवादत्वं भवेत् । यद्यपि शिवविषये 'विश्वाधि यो रुद्रो महर्षिः' इत्यस्ति वाक्यम्, तथापि न तत्रोत्तमत्वबोधकशब्दोऽस्ति । यद्यपि 'विश्वाधिपो रुद्रो महर्षिः' इति श्वेताश्वतरोपनिषद्वाक्यमस्ति, तथापि तदुपनिषदो दशोपनिषद्बहिर्भूतत्वेन ज्ञानकाण्डानन्तर्भावात् 'सर्वपाशापहानिः, तत्कारणं सांख्ययोगाभिपन्नम्' इत्यादिना तदीयवाक्येन पाशुपतसांख्ययोगाद्यवैदिकमतावलम्बत्वावगमाच्च न श्रद्धेयत्वमिति । इदं तु तत्त्वम्— श्वेताश्वतरोपनिषदि 'किं कारणं ब्रह्म' इति प्रथमाध्याये प्रश्नरूपोपक्रमे ब्रह्मरूपं पृष्टम् । तद्ब्रह्मोपनिषत्परमिति प्रथमाध्यायान्तवाक्येन ब्रह्म पृष्टं प्रथमाध्यायनिरूपितरूपमित्युपसंहारात्प्रथमाध्याय एव पृष्टं ब्रह्म निरूपितमित्यवगमात् । प्रथमाध्याये च 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' इति मन्त्रेण क्षरात्मानाविति प्रधानहरौ निर्दिश्य 'ईशते देवः' इति तयोः शास्यत्वोक्त्या पृष्टं ब्रह्म न शिव इति सिध्यति । ब्रह्मण इतरशास्यत्वासंभ-

वात । न च हर इत्यस्य देव इत्यनेनान्वयः, हर इत्यनन्तरमध्यापकसंप्रदाय-सिद्धपाठविच्छेदावगमेन हर इत्यन्तेनैव तद्वाक्यस्य समाप्त्यवगमेन तस्य तदुत्तर-वाक्यस्थदेवेनान्वयानुपपत्तेः । द्वितीयाध्याये 'या ते रुद्र शिवा तनूः' इति मन्त्रद्वयं पठित्वा 'ततः परं ब्रह्म परं बृहन्तं यथा निकायं सर्वभूतेषु गूढम्' इत्यनेन मन्त्रद्वयोक्तशिवात्परब्रह्मणः परत्वाभिधानात् न शिवः परं ब्रह्मेति सिध्यति । षष्ठाध्याये 'स तन्मयो ह्यमृत ईशसंस्थो ज्ञः सर्वगो भुवनस्यास्य गोप्ता' इत्यनेन ईशशब्दिते शिवे परमात्मन ईशसंस्थ इति पदेन स्थित्युक्त्या शिवो न परमात्मेति सिध्यति । ईशे संस्था स्थितिर्यस्येति विग्रहः । तस्माद्द्विती-याद्यध्यायगतानां परमात्मनि श्रूयमाणानां शिवरुद्रादिशब्दानां योगेन परमात्म-परत्वमेव न शिवपरत्वमित्यलम् ।

इदं तु बोध्यम्— पौराणिकशैवबहूक्तसूतसंहिताप्रथमश्लोकेन 'ऐश्वरं परमं तत्त्वमादिमध्यान्तवर्जितम् । आधारं सर्वभूतानामनाधारमविक्रियम् । अम्बि-कापतिमीशानमनीशं प्रणमाम्यहम्' इति श्लोकेनाम्बिकापतिशब्दितस्य शिव-स्यैश्वरत्वोक्त्या शिवस्यानीश्वरत्वमावश्यिकम् 'तमीश्वराणां परमं महेश्वरम्' इति दशोपनिषद्रूपब्रह्मकाण्डबहिर्भूतश्वेताश्वतरोपनिषद्वाक्ये आलोचिते सति समु-दायादेकदेशपृथक्करणरूपनिर्धारणार्थकषष्ठीविभक्तिप्रकृतीश्वरपदस्य बहुव्यक्ति-रूढत्वावश्यिकतया ईश्वरशब्दस्य शिवमात्रार्थत्वमयुक्तम् । परमात्मनो महेश्वर-त्वेन ईश्वरसमुदायान्निर्धारणमनुक्त्वा परमत्वविशेषितमहेश्वरत्वेन निर्धारणोक्त्या महेश्वरपदं परमापरममहेश्वरसाधारणमित्यवगत्या न शिवमात्रासाधारणम् । ईशानपदं शानजन्तमिव ताच्छील्यार्थकचानशन्तमपि यौगिकमेव । न शिवे रूढम् । 'आढ्यसुभग—' इतिसूत्रमहाभाष्ये रूढशब्दप्रकारास्ताच्छीलिका इति ताच्छीलिकप्रत्ययान्तस्य रूढशब्दसदृशत्वोक्त्या रूढशब्दत्वाभावात् । प्रकारशब्दः सादृश्यार्थक इति तत्र कैयटः ।

इदं परिशिष्टतत्त्वं विज्ञेयम् । 'षड्ढोता वै प्रजापतिरिदं सर्वमसृजत, स मनो-ऽसृजत, मनसोऽधि गायत्रीमसृजत, तद्गायत्रीं यश आर्च्छत्, तामालभत,

गायत्रिया अधि च्छन्दास्यसृजत, छन्दोभ्योऽधि साम, तत्साम यश आर्च्छत्, तदालभत, साम्नोऽधि यजूंष्यसृजत, यजुर्भ्योऽधि विष्णुम्, तद्विष्णुं यश आर्च्छत्, तमालभत, विष्णोरध्योषधीरसृजत, ओषधीभ्योऽधि सोमम्' इत्यादौ मनसोऽधि गायत्रीमित्येतावन्मात्रोक्तौ 'स मनोऽसृजत' इत्यव्यवहितपूर्ववाक्यस्थासृजतेत्यस्यानुषङ्गेण लाभे असृजतेति पुनरुक्तिः तदुपरितनेषु 'छन्दोभ्योऽधि साम, यजुर्भ्योऽधि विष्णुम्, ओषधीभ्योऽधि सोमम्' इत्यादिषु द्वितीयस्थानपतितेषु असृजतेत्यस्य तत्तदव्यवहितपूर्ववर्तिनः अनुषङ्गाभावज्ञापनार्था। अन्यथा असृजतेति पुनरुक्तेर्वैयर्थ्यापत्तेः। अचिन्तयदिति तत्र क्रियाध्याहारः औचित्यात्, न तु असृजतेत्यनुषङ्गः; आलभतेत्युक्त आलम्भः स्पर्शः, न तु हिंसा 'आलम्भः स्पर्शहिंसयोः' इति कोशे स्पर्शनस्यैवालम्भार्थमुख्यत्वोक्तेः, 'वत्समालभेत' इत्यादिदर्शनाच्च। यत्तु शिवतत्त्वविवेके अप्पय्यदीक्षितैः श्रीमच्छंकरभगवत्पादकृतप्रपञ्चसारे क्षीराब्धिशायिनो भगवतो ब्रह्मविष्णुरुद्रत्रिमूर्त्युत्तीर्णत्वकथनं विष्णुव्यूहान्तर्गतानिरुद्धप्रद्युम्नसंकर्षणरूपत्रिमूर्त्युत्तीर्णत्वाभिप्रायम्, न तु यथाश्रुतत्रिमूर्त्युत्तीर्णत्वाभिप्रायमित्युक्तम्, तन्न; महाभारते मोक्षधर्मे सप्तचत्वारिंशदधिकत्रिशततमाध्याये 'श्वेतं चन्द्रविशुद्धाभमनिरुद्धतनौ स्थितम्। आत्मप्रमाणरचिते अपामुपरि कल्पिते॥ शयने नागभोगाढ्ये ज्वालामालासमावृते॥', तस्मिन्नेवाध्याये— 'सोऽनिरुद्ध इति प्रोक्तस्तत्प्रधानं प्रचक्षते। अप्स्वेव शयनं चक्रे निद्रायोगमुपागतः।', तत्रैव चत्वारिंशदधिकत्रिशततमाध्याये— 'ततस्ते ब्रह्मणा सार्धमृषयो विबुधास्तथा। क्षीरोदस्योत्तरं कूलं जग्मुर्लोकहितार्थिनः' इत्युपक्रम्य 'गतेषु त्रिदिवौकःसु ब्रह्मैकः पर्यवस्थितः। दिदृक्षुर्भगवन्तं तमनिरुद्धतनौ स्थितम्॥ तं देवो दर्शयामास कृत्वा हयशिरो महत्' इति प्रवृत्तः श्लोकः। 'अनिरुद्ध इति प्रोक्तो लोकानां प्रभवाप्ययः' इत्यादिश्लोकपर्यालोचने विष्णुव्यूहान्तर्गतानिरुद्ध एव क्षीराब्धिशायी भगवान्प्रपञ्चसारे लिखित इति गम्यते। तथा च क्षीराब्धिशायिनोऽनिरुद्धस्य भगवत्पादलिखितस्य कथमनिरुद्धघटितत्रिमूर्त्युत्तीर्णत्वं भवेत्।

गुणीभूतब्रह्मविष्णुरुद्ररूपत्रिमूर्त्युत्तीर्णत्वमेव भगवत्पादाभिमतमिति वक्तव्यम् । रुद्रवद्विष्णुरपि भगवद्व्यूहान्तर्गतानिरुद्धापेक्षया न्यून एव । अनिरुद्धस्तु व्यूही । अनिरुद्धव्यूहकस्य वासुदेवस्य सर्वापेक्षयोत्कृष्टत्वे कः संदेह इति प्रपञ्चसारग्रन्थाद्व्यज्यत इत्यलम् ।

इदं तु बोध्यम्— श्रीदेव्या लक्ष्म्याः 'ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्' इति पठ्यमानश्रुत्या यथा परत्वं व्यज्यते, तथा महाभारते मोक्षधर्मे पञ्चविंशत्यधिकद्विशततमाध्याये 'इन्द्रं प्रति श्रीरुवाच—न मां विरोचनो वेद नायं वैरोचनो बलिः । भूतिर्लक्ष्मीति मामाहुः श्रीरित्येव च वासव । त्वं मां शक्र न जानीषे सर्वे देवा न मां विदुः । नो धाता न विधाता मां विदधाति कथंचन ॥ सत्ये स्थितास्मि दाने च व्रते तपसि चैव हि । पराक्रमे च धर्मे च पराचीनस्ततो बलिः' इत्यादिना भगवत्पत्न्या लक्ष्म्याः सर्वदेवावेद्यत्वधातृशब्दितचतुर्मुखविधातृशब्दितविष्णुसृष्टजगदनन्तःपातित्वोक्त्या परत्वं व्यज्यते । नैवं स्पष्टश्रुतिभारतवाक्याभ्यां स्तुत्यनन्तर्गताभ्यां दुर्गायाः सरस्वत्या वा परत्वं कथितमस्तीत्यलम् ।

इति
ज्ञानकाण्डान्तर्गतोपनिषत्प्रमाणाविचारः ।

॥ श्रीः ॥

अथ ज्ञानकाण्डानन्तर्गतोपनिषदो विचार्यन्ते ।

**अथर्वशिरउपनिषद्विलासः ।**

अथर्वशिरसि स्थितैः पदकदम्बकैर्विष्णुतः
शिवस्य जनिरुच्यते प्रथमसत्त्वसंकीर्तनात् ।
तथापि गुरुभावना शिवसुरे हि कार्या जनै-
र्यतोऽयमुपदेष्टृतामधिगतः स देवान्प्रति ॥

'देवा ह वै स्वर्गं लोकमगमन्, ते देवा रुद्रमपृच्छन्को भवानिति, सोऽब्रवीत्' इत्यन्तं वाक्यं स्पष्टार्थकम् । 'अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चित्' इत्यस्य रौद्रवचनवाक्यैकदेशस्यायमर्थः— अहं रुद्रः प्रथममासमुद्भवं प्राप्तवान् । प्रथमशब्दसमभिव्याहृतस्यासधातोः प्रथमं यज्ञदत्त आसीदित्यादौ विष्णुमित्ररूपद्वितीयानुजोत्पत्तेः पूर्वं यज्ञदत्त उत्पन्न इत्यर्थस्य लोकसिद्धत्वात्, प्रथमत्वस्य द्वितीयप्रतियोगिकत्वात् । प्रथममित्यस्याग्रे इत्यर्थत्वं तु न संभवति, अग्रत्वस्य पाश्चात्त्यकालप्रतियोगिकत्वेन द्वितीयप्रतियोगिकत्वासंभवात् । प्रथमाग्रशब्दयोः प्रवृत्तिनिमित्तभेदेन एकार्थत्वासंभवात् । असधातोः सत्तामात्रार्थत्वेऽपि प्राथम्यस्य तत्रान्वयादेव रुद्रसत्तायाः प्राथम्योक्तौ तदन्यगतसत्ताया द्वितीयत्वाद्यावश्यिकतया अन्यसत्तापेक्षया रुद्रसत्ताप्राथम्यस्य रुद्रोत्पत्तिप्राथम्य एव विश्रान्तेः । तदुक्तं जैमिनीयन्यायमालायां प्रवर्ग्याधिकरणे माधवाचार्यैः— 'प्रथमद्वितीयादिशब्दाः क्रियाया आवृत्तौ मुख्यास्तत्संबन्धाद्वस्तुषूपचर्यन्ते.... आदावुत्पन्नत्वात्प्रथमः पुत्रस्तदनन्तरमुत्पन्नत्वाद्द्वितीयः' इति । पाश्चात्त्यत्वं द्वितीयतृतीयादिसाधारणम् । द्वितीयत्वं तु द्वितीयमात्रवृत्तीत्यग्रप्रथमशब्दप्रवृत्तिनिरूपकयोर्भेदः । वर्तामि च भविष्यामि चेत्यनेन रुद्रचेतनस्य चिरजीवित्वमुच्यते । नान्यः कश्चिदित्यनेन रुद्रव्यतिरिक्तस्य

प्रथमोत्पत्तिः प्रतिषिध्यते । प्रथमोत्पत्तेः प्रस्तुतत्वात् । 'मत्तो व्यतिरिक्त इति सोऽन्तरादन्तरं प्राविशत् दिशश्चान्तरं प्राविशत्' इति रुद्रवाक्यस्यायमर्थः । व्यतिरिक्त इत्यस्य नान्यः कश्चिदित्यनेन नान्वयः भिन्नार्थकेनान्यपदेन पौनरुक्त्यापत्तेः । किं तु उपरितनेन इतिपदेन । 'अथात आदेशो नेति नेति' इत्यत्रेव इतिशब्दस्येदंशब्दसमानार्थकत्वात् । व्यतिरिक्त इतीत्यत्र इतिशब्दोऽयमित्यर्थे । स इति तच्छब्दस्तु वेदशास्त्ररूपप्रदेशान्तरसिद्ध इत्यर्थे । सोऽयं देवदत्त इत्यादाविदंशब्दस्य संनिकृष्टार्थे तच्छब्दस्य प्रदेशान्तरवृत्तित्वेन प्रसिद्धार्थे वर्तनदर्शनात् । तथा च मत्तो व्यतिरिक्तो रुद्राद्भिन्नः अयं मद्बुद्धिसंनिकृष्टः सः सर्ववेदप्रसिद्धः परमात्मा अन्तरादन्तरं प्राविशदित्यर्थः । एतेन मत्तो व्यतिरिक्त इतीत्यन्तं रुद्रवाक्यम्, सोऽन्तरादित्यस्य रुद्रवाक्यत्वे रुद्रेणैव स इति प्राविशदिति च पारोक्ष्यनिर्देशेन स्वभिन्नः सर्वानुप्रविष्टः परमात्मा इत्यभ्युपगतः स्यात्; तन्मा भूदित्येतदर्थं सोऽन्तरादन्तरं प्राविशदिति श्रुतिवाक्यमित्यभ्युपगम्य सोऽहं नित्यानित्योऽहमिति पुनः रुद्रवाक्यमित्युक्तमपास्तम् । तत्तत्पदानां तत्तत्स्थान एव ऋजुगत्यान्वयं स्वीकृत्य उक्तसर्ववाक्यानां रुद्रवाक्यत्वे संभवति कस्यचिद्रुद्रवाक्यत्वं कस्यचिच्छ्रुतिवाक्यत्वमित्यस्य कल्पनस्यानौचित्यात् । व्यतिरिक्तपदस्य भवत्पक्षे कुत्राप्यन्वयानुपपत्तेश्च । सोऽहं नित्यानित्य इत्यादेरयमर्थः— अहंशब्दिते रुद्रे तच्छब्दार्थस्य परमात्मन उपादानोपादेयभावनिबन्धनतादात्म्यसंबन्धेन मृद्घटः सर्वं खल्विदं ब्रह्मेत्यादाविवान्वयः । रुद्रस्य स्वरूपतो नित्यानित्यवस्त्वनुप्रविष्टत्वेन रूपेण नित्यानित्यवस्तुतादात्म्याभावेऽपि सर्वानुप्रविष्टपरमात्मतादात्म्यापन्नत्वेन रूपेण नित्यानित्यतादात्म्यमिति बोधयितुमहंपदस्य स इति विशेषणं दत्तम् । अन्यथा स इति पदं विना अहं नित्यानित्य इत्येव श्रूयेत । रुद्रस्य परमात्मोत्पन्नत्वं च 'नारायणाद्ब्रह्मा जायते' 'नारायणाद्रुद्रो जायते' इत्यादिना रुद्रस्य नारायणाधीनस्थितिकत्वं नारायणाधीनप्रलयवत्त्वं च 'नारायणे प्रवर्धन्ते' 'नारायणे प्रलीयन्ते' इत्यादिना च नारायणोपनिषदि प्रतिपादितं दृश्यते । यदधीनोत्पत्तिस्थितिप्रलयकत्वं यस्य तस्य तत्तादात्म्यमित्यत्र 'सर्वं खल्विदं ब्रह्म तज्जलानिति' इति

श्रुतिः प्रमाणम्, कृत्स्नस्य प्रपञ्चस्य ब्रह्मजत्वात् ब्रह्मणि लीयमानत्वात् तेन रक्ष्यमाणत्वाद्धेतोः ब्रह्मात्मकं जगदिति सर्वं खल्विति श्रुत्यर्थः। तथा च परमात्मतादात्म्यापन्नत्वविशिष्टोऽहं नित्यानित्यतादात्म्यवानिति फलितम्। अहं ब्रह्मेत्यादावपि स इत्यस्यानुषङ्गेण वाक्यार्थो वर्णनीयः। 'सं ते प्राणो वायुर्वातेन गच्छतां सं यजत्रैरङ्गानि' इत्यादौ प्रथमश्रुतस्य गम्धातोरनुषङ्गवत् 'आत्मन आकाशः संभूतः, आकाशाद्वायुः' इत्यादौ संभूतशब्दस्योपर्यनुषङ्गवच्च। एवम् 'मां यो वेद' 'स सर्वान्वेद' इत्यस्य एवं परमात्मतादात्म्यापन्नत्वेन मां रुद्रं यो जानाति स सर्वाञ्जानातीत्यर्थः। 'यो वै रुद्रः स भगवान्, यश्च ब्रह्मा भूर्भुवः-सुवस्तस्मै वै नमो नमः, शीर्षञ्जनपदो विश्वरूपोऽसि यश्च विष्णुर्यश्च महेश्वरः' इत्यादिः। यद्यपि 'ततो देवा उर्ध्वबाहवस्तन्वन्ति' इत्युपक्रमानुसारेण स्तुतितया न स्वार्थे तात्पर्यम्। उक्तं हि दीक्षितवर्यैः नृसिंहतापिन्याम् 'यो वै नृसिंहो भगवान्यश्च ब्रह्मा भूर्भुवः सुवस्तस्मै वै नमो नमः, यश्च विष्णुः यश्च रुद्रः' इत्यादिः अथ कैर्मन्त्रैर्देवः स्तुतो भवति स्वात्मानं दर्शयतीत्युपक्रमानुसारेण स्तुतित्वम्, 'स्तुवन्नामसहस्रेण' इत्युपक्रमानुसारान्नामसहस्रस्य स्तुतित्वं चेति। तथापि 'यो वै रुद्रः स भगवान्' इत्येतद्घटिताक्षरस्वरसगतिपर्यालोचने विष्णुपरत्वमेव तस्य प्रतीयते। तत्र रुद्रशब्दो भगवच्छब्दश्च प्रतिपर्यायमभ्यस्तो दृश्यते। रुद्रशब्दस्य कोशेन शिवरूढत्ववत् 'वासुदेवार्जुनाभ्यां वुन्' इतिसूत्रमहाभाष्ये— नेयं क्षत्रियसमाख्या संज्ञैषा तत्र भगवत इति भगवच्छब्दस्य विष्णवसाधारणवासुदेवपर्यायत्वोक्त्या विष्णुरूढत्वमविप्रतिपन्नम्। 'शक्तिग्रहं व्याकरण-' इत्याद्युक्तरीत्या कोशवद्व्याकरणस्यापि शक्तिग्राहकत्वात्। तत्र कैयटोऽपि— 'नित्यः कश्चिद्देवताविशेषः परमात्मा इह वासुदेवशब्देन गृह्यते' इत्याह। तथा च रुद्रस्य विष्णोश्च प्रतिपर्यायं प्रतिपाद्यत्वं दृश्यते अभ्याससामर्थ्यात। रुद्रस्य प्रतिपाद्यत्वं तत्त्वोपदेष्टृत्वादिना आचार्यत्वप्रयुक्तम्। आचार्येऽपि यथा परमात्मनि भक्तिस्तथा भक्तिः कार्येति 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' इति श्वेताश्वतरोपनिषत्प्रतिपादयति। विष्णोश्च

साक्षात्परमात्मत्वात्तद्भक्तेः परमपुरुषार्थतया प्रतिपाद्यत्वम् । विष्णोः परमात्मत्वमनुपदोदाहृतकैयटवचनेन श्रुत्यादिबहुप्रमाणैश्च सिद्धमेव । द्वयोर्मध्ये विष्णोः प्राधान्यं रुद्रस्य तदुपसर्जनत्वमेव । तदुपसर्जनत्वं च वाक्यस्वरसगत्या प्रतीयते—यः परमात्मा रुद्रः रुद्रतादात्म्यापन्नः तादात्म्यस्योपादानोपादेयनिबन्धनस्य सर्वं खल्वित्यादिश्रुतिसिद्धत्वात्, यश्च परमात्मा चतुर्मुखतादात्म्यापन्नः सः रुद्रचतुर्मुखतादात्म्यापन्नो भगवान्विष्णुः । तस्मै उभयतादात्म्यापन्नाय विष्णुरूपाय परमात्मने नम इत्यर्थः । एवमन्येऽपि पर्याया एवमेव व्याख्येयाः । ओंकारः स प्रणवो यः प्रणवः स सर्वव्यापी, यः सर्वव्यापी सोऽनन्तः, योऽनन्तस्तत्तारम्, यत्तारं तत्सूक्ष्मम्, यत्सूक्ष्मं तच्छुक्लम्, यच्छुक्लं तद्वैद्युतम्, यद्वैद्युतं तत्परं ब्रह्म' इति प्रणवं प्रस्तुत्य 'स एकः' इत्यादिना प्रणवस्यैव नामान्युक्त्वा 'अथ कस्मादुच्यते ओंकारः' इत्यादिना ओंकारादीनि नामानि निरुच्यन्ते । न ह्यत्र नामनिर्वचनबलेन शिवस्य विष्णोर्वा प्रतिपादनमिति शक्यं वक्तुम्, ओंकारस्यैव प्रस्तुतत्वात् । ओंकारस्य च तद्वाच्यस्य च तादात्म्यविवक्षया तद्वाच्यस्यापि प्रस्तुतत्वे विष्णुरेव तद्वाच्यः स्वीकर्तव्यः, प्रणवस्य भगवदष्टाक्षरद्वादशाक्षरषडक्षरमन्त्रशरीरघटकतया विष्णोरेव तद्वाच्यत्वावगमात् । नारायणोपनिषदि 'ओमित्येकाक्षरम्, नम इति द्वे अक्षरे, नारायणायेति पञ्चाक्षराणि, एतद्वै नारायणस्याष्टाक्षरं पदम्' इति भगवन्मन्त्रशरीरघटकतया ओंकारो निवेशितः । न त्वेवं शैवपञ्चाक्षरादिदेवतान्तरमन्त्रेषु तन्मन्त्रघटकतया प्रणवनिवेशो दृश्यते येन देवतान्तरस्यापि प्रणववाच्यत्वं स्यात् । शैवपञ्चाक्षरे च प्रणवस्य मन्त्रबहिर्भाव एव दृश्यते । अत एव च स्त्रीशूद्रादीनां शैवपञ्चाक्षरेऽधिकारः । वस्तुतस्तु पञ्चाक्षरस्य श्रौतत्वमेव न सिध्यति, 'नमः शिवाय च' इति श्रुतौ चान्तस्य मन्त्रत्वश्रवणात् । 'सदाशिवोम्' इति सदाशिवपदोत्तरमोंकारश्रवणात् सदाशिवस्य प्रणववाच्यत्वमपि कैश्चिदुक्तं न युक्तम्; 'सुब्रह्मण्योम्' 'भूर्भुवः सुवराप ओम्' इत्यादावपि प्रणवस्य दर्शनेन सुब्रह्मण्यादेरपि प्रणववाच्यतापत्तेः । इष्टापत्तौ 'ओं तत्स-

दिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति 'ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् । यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः' इति च भगवद्गीतावचनेन 'ओमित्येवं सदा विप्राः पठत ध्यात केशवम्' इति हरिवंशे शिववचनेन 'हरिरोमिति वक्तव्यम्' इति नारदव्यासशिक्षावचनेन च प्रणवः परब्रह्मभूतस्य विष्णोर्वाचकः विष्णुस्तद्वाच्य इत्यवगमेन विष्णुप्रणवयोर्वाच्यवाचकत्वबोधकोदाहृतबहुप्रमाणविरोधापत्तेरित्यलम् ।

'तदेतद्रुद्रचरितम्' इत्यादेरयमर्थः— रुद्रस्य को भवानित्युपक्रमपर्यालोचनया तत्त्वोपदेष्टृतया आचार्यत्वेन तदुपदेशादिरूपं रुद्रचरितमिति । अग्निरित्यादिना भस्म गृहीत्वा निमृज्याङ्गानि संस्पृशेत् व्रतमेतत्पाशुपतम् । पशुपाशविमोक्षायेत्यस्यायमर्थः— पशुयागसाधनतया विहितस्य पशोर्यत्पाशेन बन्धनं तन्मोचनकाले 'अदितिः पाशान्प्रमुमोक्तु' इति मन्त्रस्य लिङ्गेन साधनत्ववत् अनारभ्याधीतेन अग्निरित्यादिवाक्येन पशुपाशविमोक्षणोद्देशेन अग्निरित्यादिमन्त्राभिमन्त्रितभस्मना पाशुकसर्वाङ्गलेपनस्य विधानात् यागाङ्गभूतपशुपाशविमोक्षणकाले भस्मना पश्ववयवेषु लेपनं कर्तव्यमिति । एवमर्थवर्णन एव च पशुपाशशब्दयोः प्रसिद्धार्थः स्वीकृतो भवति । न हि प्राणिसामान्ये पशुशब्दस्य शक्तिग्राहकं कोशादिकमुपलभ्यते । न वा पशुशब्दो वेदशास्त्रसंपन्ने महापुरुषे मनुष्यसामान्ये वा दृष्टप्रयोग उपलभ्यते । न हि रशनावाचकस्य पाशशब्दस्य संसारबन्धनरूपार्थे शक्तिग्राहककोशादिकं प्रयोगो वा उपलभ्यते । चतुष्पाज्जन्तौ तु पशुशब्दस्य शक्तिग्राहककोशः प्रयोगश्च दृश्यते रशनायां पाशशब्दस्य चेत्यलम् ।

### कैवल्योपनिषद्विलासः ।

ध्यात्वा मुनिर्गच्छति भूतयोनिमित्यादिवाक्यश्रुतभूतयोनिः ।
विष्णुर्न चेशो यत आदिवाक्ये कैवल्यगे विष्णुगतेर्निरुक्तिः ॥

'अधीहि भगवन्ब्रह्मविद्यां वरिष्ठां सदा सद्भिः सेव्यमानां निगूढाम् । ययाचिरात्सर्वपापं व्यपोह्य परात्परं पुरुषमुपैति विद्वान्' इत्यादिना कैवल्योपनिषदि यया विद्यया सर्वपापविमोचनपूर्वकं नारायणाख्यं ब्रह्म प्राप्यते तां विद्यां मह्यं

ब्रूहीत्यर्थकेन प्रश्नवाक्येन मुक्तभोग्यस्य नारायणरूपत्वावगमेन 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्। ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्' इत्युपसंहारे ध्यानप्राप्यत्वेन निर्दिष्टस्य भूतयोनेरपि नारायणरूपत्वमेव वक्तव्यम्। अन्यरूपत्वे उपक्रमविरोधापत्त्या उपक्रमाधिकरणविरोधापत्तिः। न च उपक्रमे नारायणासाधारणशब्दस्याश्रवणेनोपक्रमस्य नारायणपरत्वासिद्धौ तदनुरोधेनौपसंहारिकभूतयोनिशब्दस्य नारायणपरत्वं कथं स्यादिति वाच्यम्; पञ्चमवेदत्वेन प्रसिद्धे महाभारते मोक्षधर्मे नारायणीये 'तस्यैकत्वं महत्त्वं च स एकः पुरुषः स्मृतः। महापुरुषशब्दं हि बिभर्त्येकः सनातनः' इति नारायणं प्रकृत्य वचनमस्ति। इदं च वचनं हेतूपन्यासपूर्वकं नारायणस्य पुरुषशब्दवाच्यत्वं कथयति। हि यस्मात् सनातनः एको नारायणः महापुरुषशब्दं बिभर्ति तस्मात्स एकः महापुरुषशब्दधारी नारायण एव पुरुषः स्मृतः पुरुषशब्दवाच्यत्वेन संमतः। स एक इत्यत्र एकशब्दः 'एके मुख्यान्यकेवलाः' इति कोशात् कैवल्यार्थकतया एवकारपर्याय इति वचनार्थः। न च एतद्वचनवत्सहेतुकं देवतान्तरे शक्तिग्राहकं किंचित्पुरुषशब्दस्योपलभ्यते। 'पूर्वमेवाहमिहासं तत्पुरुषस्य पुरुषत्वम्' इत्यादिवचनं तु अवयवार्थप्रदर्शनपूर्वकं पुरुषशब्दप्रवृत्तिं कथयति। अतो नास्य रूढिग्राहकत्वम्। पुराणवचनानि बहूनि 'यथा शंकरशब्दोऽयं महादेवे व्यवस्थितः। तथा पुरुषशब्दोऽयं वासुदेवेऽवतिष्ठते। एवं पुरुषशब्दोऽयं रूढ्या वक्ति जनार्दनम्' इत्यादीनि विष्णौ रूढिग्राहकाणि सन्ति। 'पुरुषो नाम संपूर्णः शिवः सत्यादिलक्षणः' इत्यादि शिवे पुरुषशब्दवृत्तिग्राहकवचनं स्कान्देऽस्तीति दीक्षितवर्यैर्लिखितम्। तद्वचने च रूढिवृत्तिग्राहकं किमपि पदं नोपलभ्यते। यद्यपि नामपदमस्ति तथापि 'अपि वा नामधेयं स्याद्यदुत्पत्तावपूर्वमविधायकत्वात्' इत्युद्भिदधिकरणे 'तद्व्यपदेशं च' इति श्येनाधिकरणे च केवलयौगिकस्य गौणस्य च नामत्वनिर्धारणस्य भाट्टदीपिकायामुक्तत्वेन नामशब्दस्य रूढिग्राहकत्वानियमात्। शिवपुराणेषु शिवे पुरुषशब्दरूढिग्राहकवचनान्युपलभ्येरंश्चेदुपलभ्यन्तां नाम। अनुपदोदाहृतमहाभारतवचने 'स एकः

पुरुषः स्मृतः' इति एवकारार्थकैकशब्देन नारायणान्यस्य पुरुषशब्दवाच्यत्वप्रतिषेधेन प्रबलपञ्चमवेदमहाभारतविरुद्धतया पुरुषशब्दस्य शिवरूढिग्राहकपुराणवचनान्यप्रमाणान्येव । तथा च 'परात्परं पुरुषमुपैति विद्वान्' इति विद्याप्राप्ये नारायणासाधारणपुरुषशब्दस्य दर्शनेन उपक्रमस्य नारायणपरत्वस्य निष्प्रत्यूहत्वात् । न च तत्क्रतुन्यायेन प्राप्यस्य भूतयोनेरुपायकोटिप्रविष्टोमासहायत्वमेव युक्तमिति शङ्क्यम् । प्राप्यकोटिगतभूतयोनिशब्दस्य केवलयौगिकत्वेन विशेष्यसाकाङ्क्षस्य प्राप्यकोटित्वेन स्वसमानजातीयोपक्रमगतपुरुषपदमुख्यार्थविष्णुपरत्वे संभवति स्वविजातीयोपायकोटिगतोमासहायपरत्वासंभवात् । प्राप्यस्योपायकोटिगतान्यरूपत्वे उक्तरीत्या शास्त्रेणैव सिद्धे तत्क्रतुन्यायस्य वचनविरुद्धत्वेन प्रकृतेऽप्रसरात् । अत एवाद्वैतिनां सिद्धान्ते 'तद्य इत्थं विदुः ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति' इत्यादौ अब्रह्मक्रतोरपि पञ्चाग्निविद्योपासकस्यार्चिरादिद्वारा ब्रह्मप्राप्त्युक्तिर्वचनबलात्संगच्छत इत्युक्तम् । 'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम्' इत्यादौ तत्क्रतुन्यायमनादृत्य वचनबलात्त्रिमात्रप्रणवे ब्रह्मदृष्टिं कुर्वतः प्रतीकोपासकस्य ब्रह्मप्राप्त्युक्तिश्चाद्वैतिनां संगच्छते । अत्र यद्यप्युमासहायध्यानेन भूतयोनिरूपनारायणप्राप्तिः फलमित्युक्त्या साक्षादेव भगवत्प्राप्तिं प्रत्युमासहायध्यानस्य साधनत्वं प्रतीयते, तथापि उपक्रमे 'परात्परं पुरुषमुपैति विद्वान्' इत्यत्र पुरुषशब्दितभगवत्प्राप्तिं प्रति साधनतया निर्दिष्टस्य विद्वानित्येतद्घटकीभूतवेदनस्य विषयाकाङ्क्षायामुपेयत्वाख्यप्राप्यत्वेन निर्दिष्टस्य पुरुषस्यैव संनिहितत्वेन विषयत्वौचित्यात् । पुरुषशब्दितविष्णुध्यानादेव विष्णुप्राप्तिलक्षणं फलं सिध्यतीत्यवगमेन एतादृशोपक्रमाविरोधाय औपसंहारिकोमासहायध्यानगतं भगवत्प्राप्तिसाधनत्वं पुरुषशब्दितविष्णुज्ञानद्वारकमित्यवसीयते । अत एव हरिवंशे कैलासयात्रायाम् 'ज्ञात्वा मां सर्वयत्नेन ततो जानीत केशवम् । उपास्योऽयं हरिर्विप्रा उपायोऽस्मि हरेः स्मृतौ ॥

एष संसारविभवं व्यपोहति न संशयः' इति देवानृषींश्च प्रति शिववचनमुक्तार्थकं संगच्छते। एतेन उमासहायं ध्यात्वा मुनिर्भवति मननाख्यविष्णुज्ञानवान्भवति, विष्णुज्ञानेन च भूतयोनिं गच्छतीत्यर्थवर्णनं वाक्यभेदापादकं प्रौढिमात्रेणोक्तमित्यवगन्तव्यम्। एतेन भूतयोनेस्तत्क्रतुन्यायेनोमासहायत्वावश्यिकत्वेन 'स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्, स एव विष्णुः' इत्यादौ उपरितनग्रन्थे स इति तच्छब्देनोमासहायभूतयोनिमनूद्य ब्रह्मादीनां विभूतित्वकथनेन तुरीयमुमासहायं ब्रह्म सिध्यतीति शिवतत्त्वविवेकोक्तमपास्तम्, अनुपदोक्तरीत्या भूतयोनेर्विष्णुरूपत्वात् तत्क्रतुन्यायस्य चाप्रसरादुमासहायस्य तुरीयत्वकथनासिद्धेः। वस्तुतस्तु त्रिमूर्तीनां मध्ये 'स ब्रह्मा स शिवः' इति विधिशिवयोर्विभूतित्वकथने एवकारो न दृश्यते। त्रिमूर्त्यन्तर्गतविष्णोः स एव विष्णुरिति भूतयोनिमनूद्य विष्णुत्वोक्तौ एवकारो दृश्यते। तेन चावगम्यते भूतयोनिरेव विष्णुः, न तु विधिशिवाविव भूतयोनिविभूतिरिति तुरीयचेतनस्य द्वितीयस्य च स्वरूपैक्यं प्रतीयत इत्यलम्।

अथर्वशिखोपनिषद्विलासः।

शिखायां मात्राः स्युः प्रणवघटकास्तासु चरमा<br>
द्वितीयादेवैक्यं भजति तटिना स्वाङ्गनियतेः।<br>
तुरीयो देवोऽतो हरिरवगतो नेतर इति<br>
प्रसूतित्यागोक्तिर्विधिमुखसुरालम्बनपरा॥

'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद् ब्रह्म' इतिश्रुति-'जन्माद्यस्य यतः'-इतिसूत्राभ्यां ब्रह्मलक्षणतयोक्तं जगदुत्पत्तिस्थितिलयत्रयकारणत्वं हरिहरविरिञ्चानां मध्ये किंनिष्ठमिति विशये विनिगमकाभावात्त्रयनिष्ठमिति प्राप्तेऽभिधीयते— जन्मादिसूत्रोक्तब्रह्मलक्षणं न विधिशिवयोः संभवति, तत्सूत्रे जन्म आदि यस्य तज्जन्मादि अस्य परिदृश्यमानप्रपञ्चस्य यतस्तद्ब्रह्मेत्यर्थः प्रतीयते। तेन च जगज्जन्मस्थितिलयत्रयकारणत्वं ब्रह्मणो लक्षणमिति सिध्यति, न तु जन्म-

कारणत्वमात्रं स्थितिकारणत्वमात्रं लयकारणत्वमात्रम् । जन्मकारणत्वमात्रस्य ब्रह्मलक्षणत्वे सूत्रे जन्मास्येति निर्देष्टव्यम् । न तु जन्माद्यस्येति, आदिशब्दस्य निष्प्रयोजनत्वात् । श्रुतावपि जन्मस्थितिलयत्रयाश्रयं तच्छब्देनानूद्य ब्रह्मत्वोक्त्या त्रयकारणत्वमेव ब्रह्मलक्षणमित्युक्तं भवति । अन्यथा यतो वा इमानि भूतानि जायन्ते तद्ब्रह्म, येन जातानि जीवन्ति तद्ब्रह्मेति जन्माद्येकैकाश्रयानुवादार्थं तत्र तत्र तत्पदं स्यात् । ईदृशं च जन्मादित्रयकारणत्वं न क्वचिदपि श्रुतौ विधिशिवयोः प्रतिपादितं दृश्यते । विष्णौ तु 'नारायणाद्ब्रह्मा जायते' 'नारायणाद्रुद्रो जायते' 'नारायणादिन्द्रो जायते' 'नारायणाद्द्वादशादित्या रुद्रा वसवः सर्वाणि च्छन्दांसि नारायणादेव समुत्पद्यन्ते नारायणे प्रवर्धन्ते नारायणे प्रलीयन्ते ब्रह्मा नारायणः शिवश्च नारायणः शक्रश्च नारायणः नारायण एवेदं सर्वम्' इति नारायणोपनिषदि त्रिपाद्विभूतिनारायणोपनिषदि च विधिशिवादिकृत्स्नजगदुत्पत्तिस्थितिलयकारणत्वं कथितमस्ति । अतो जिज्ञास्यं ब्रह्म विष्णुरेवेति । ननु 'ध्यायीतेशानम्, प्रध्यायितव्यम्, इदं सर्वं ब्रह्मविष्णुरुद्रेन्द्राः संप्रसूयन्ते सह भूतैः सर्वाणि चेन्द्रियाणि, न कारणं कारणानां धाता ध्याता कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शंभुराकाशमध्ये सर्वमन्यत्परित्यज्य शिव एको ध्येयः शिवंकरः इति समाप्ताथर्वशिखा' इत्यथर्वशिखोपनिषद्वाक्येन विष्णोर्जननोक्त्या न तस्य परब्रह्मत्वं संभवतीति चेन्न; अस्यामुपनिषद्युपक्रमे प्रथमा रक्तपीता महद्ब्रह्मदैवत्या द्वितीया विद्युन्मती कृष्णा विष्णुदैवत्या तृतीया शुभाशुभा शुक्ला रुद्रदैवत्या यावसानेऽस्य चतुर्थ्यर्धमात्रा सा विद्युन्मती सर्ववर्णा पुरुषदैवत्या' इति विष्णुदैवत्यद्वितीयमात्रायाः पुरुषदैवत्यचतुर्थार्धमात्रायाश्च विद्युन्मतीत्वोक्त्या इतरयोश्च तदनुक्त्या द्वितीयार्धमात्रादेवतयोः विष्णुपुरुषयोरैक्यसिद्ध्या अर्धमात्रादैवपुरुषस्य परमात्मनः 'नादान्ते परमात्मनि संप्रतिष्ठाप्य ध्यायीतेशानम्' इत्युपरितनवाक्येन प्रणवान्तार्धमात्रारूपत्वस्य कथनेन वाच्यवाचकयोस्तादात्म्यरीत्या अर्धमात्रादेवतायाः पुरुषस्य परमात्मत्वं निष्प्रत्यूहमिति शैवैरप्यभ्युपगमेन तादृशपरमात्माभिन्नस्य विष्णोर्ब्रह्मविष्णुरुद्रेन्द्राः संप्रसूयन्ते

इत्यत्र मुख्योत्पत्तिस्वीकारे परमात्मन एवोत्पत्तिरुक्ता स्यात् । तथा सति शून्यवादः प्रसज्जेत । अत उपक्रमाविरोधाय विष्णोर्जनिरवताररूपोच्यते न तु मुख्यत इत्यवगमेन विष्णोः परब्रह्मत्वाविरोधात् । किं च 'ध्यायीतेशानम्' इत्युपक्रमे यद्ध्यानं विहितं तस्यैवार्थस्य 'शिव एको ध्येयः शिवंकरः' इत्युपसंहारात् उपक्रमोपसंहारयोरेकार्थत्वे एकवाक्यत्वेन तद्घटकीभूतानां तन्मध्यपतितानामपि सर्वेषां विधायकप्रत्ययघटितानामप्यर्थवादत्वस्य 'पौर्णमासीवदुपांशुयाजः स्यात्' इति उपांशुयाजाधिकरणे स्थापितन्यायेन 'इदं सर्वं ब्रह्मविष्णुरुद्रेन्द्राः संप्रसूयन्ते' इत्यादेरर्थवादत्वावश्यिकतया अर्थवादस्य च 'स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्' 'स्तुतयेऽनुमतिर्वा' इत्युत्तरतन्त्रसूत्ररीत्या स्वार्थतात्पर्याभावस्यावगत्या उक्तार्थवादवाक्येन विष्णूत्पत्तेर्वक्तुमशक्यत्वाच्च तस्य परब्रह्मत्वं निष्प्रत्यूहम्। एतेन 'विष्णुरित्था परममस्य विद्वाञ्जातो बृहन्नभिपाति तृतीयम्' इति ऋग्वेदश्रुत्या विष्णोरुत्पत्तिरित्युक्तमपास्तम् । उक्तश्रुत्या विष्णूत्पत्तेरेवाप्रतिपादनात् विष्णुर्बृहञ्जात इत्यन्वये उत्पत्तिरुक्ता भवेत् । स चायुक्तः । अव्यवहितान्वयसंभवे व्यवहितान्वयस्यासंभवात् । इत्थेति पदेन विष्णोरन्वयं स्वीकृत्य वाक्यं पदद्वयात्मकं परिसमाप्य अस्येति पदेन पदद्वयात्मकवाक्योपात्तस्य परामर्शनीयतया विष्णोरित्यस्य बृहञ्जात इत्यन्वये अस्येतिपदपरामर्शनीयार्थासंगतिप्रसङ्गाच्च। प्रत्युत विष्णोर्महामहिमत्वमेवानया श्रुत्या प्रतिपाद्यते विष्णुः इत्था पूर्वोक्तैवमादिगुणविशिष्टः, अतोऽस्य विष्णोः परमं पदं विद्वान् जानन्पुरुषः बृहञ्जातः महत्त्वं प्राप्तवान्, तृतीयं भूमिस्वर्गापेक्षया तृतीयं सत्यलोकाख्यं स्थानं पाति रक्षति चतुर्मुखभावं प्राप्नोतीति श्रुत्यर्थः स्वारसिकः प्रतीयते । यत्तु शिवतत्त्वविवेके 'विष्णुर्वाकामयत पुण्यं श्लोकं शृणवानीति न मा पापिनी कीर्तिरागच्छेदिति स एतं विष्णवे श्रोणायै पुरोडाशं त्रिकपालं निरवपत्, ततो वै पुण्यं श्लोकमशृणुत' इति नक्षत्रेष्ट्यर्थवादेन विष्णोः पापसंबन्धः कर्माधीनमैश्वर्यं च प्रतीयते । शतपथब्राह्मणे 'पुरुषो ह वै नारायणो अकामयत, अतितिष्ठेयं सर्वाणि भूतान्यहमेवेदं सर्वं भूतानीति स इदं सर्वमभवत्' इत्यनेन

पुरुषमेधार्थवादेन पुरुषसूक्तसिद्धं सार्वात्म्यं विष्णोः कर्मायत्तं प्रतीयते । 'वैष्णवं वामनमालभेत' इति विध्यनन्तरं श्रुतेन 'विष्णुरेव भूत्वेमाँल्लोकानभिजयति' इत्यर्थवादेन विष्णुत्वस्य कर्मसाध्यत्वं प्रतीयते । तत्रैवाग्निप्रकरणे उख्याग्निभरणसंनिधौ श्रुतस्य 'यद्विष्णुक्रमान्क्रमते' इति मन्त्रस्य प्रकृतकर्माङ्गभूतकर्तृसंस्कारविष्णुक्रमप्रतिपादकस्यानन्तरम् 'विष्णुरेव भूत्वा यजमानश्छन्दोभिरिमाँल्लोकाननभिजय्यानभिजयति' इति वाक्येन 'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्' इति चातुर्थिकन्यायादर्थवादभूतेन विष्णुत्वस्य कर्मसाध्यत्वं प्रतीयते । छन्दोगानामृग्ग्रन्थे 'सोमं राजानं वरुणमग्निमन्वारभामहे, आदित्यं विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम्' इति सोमविष्ण्वादीन्प्रकृत्य 'इत एत उदारुहन् दिवः पृष्ठान्यारुहन् प्रभुर्जयो यथा पथोद्यामङ्गिरसो ययुः' इति प्रकृतसोमविष्ण्वादीनेत इति परामृश्य तेषां स्वर्गारोहणमुक्त्वा अङ्गिरसामिव विष्ण्वादिस्वर्गारोहणस्यापि प्रभुर्जय इति पदेन पाककर्मणः भ्रस्जधातोर्देवोद्देशेन हविःपाकार्थतया यज्ञेषु हविषां भर्जनं कृतवन्तः इत्यर्थकेन कर्मसाध्यत्वं प्रतीयते । सामवेद एव मयि वर्च इत्यनेन कल्पेन चत्वारि वर्षाणि प्रयुञ्जानस्त्रयाणां लोकानामाधिपत्यं गच्छतीति त्रिलोकाधिपत्यरूपविष्णुत्वस्य कर्मसाध्यत्वं प्रतीयते । अतो न विष्णोः परब्रह्मत्वमिति । तत्प्रौढिवादमात्रम् । तदुदाहृतार्थवादवाक्यानां स्वार्थतात्पर्याभावेन तैर्विष्णोः कर्माधीनैश्वर्यवत्त्वासिद्धेः । अन्यथा 'ब्रह्म वा अकामयत ब्रह्मलोकमभिजयेयमिति, तदेतं ब्रह्मणे अभिजिते चरुं निरवपत्, ततो वै तद्ब्रह्मलोकमभिजयत्' इत्यनेन नक्षत्रेष्ट्यर्थवादेन नपुंसकब्रह्मशब्दप्रतिपाद्यपरमात्मनोऽपि कर्माधीनैश्वर्यापत्तेः । 'सत्यं ज्ञानमनन्तं ब्रह्म' 'आत्मन आकाशः संभूतः' 'तद्विजिज्ञासस्व तद्ब्रह्म' इत्यादिश्रुतिविरोधात् । 'ब्रह्म वाकामयत' इत्यादेरसदर्थवादत्वं यद्याश्रीयते तर्हि नारायणोपनिषत्— 'नारायणाद्ब्रह्मा जायते, नारायणाद्रुद्रो जायते, शुद्धो देव एको नारायणः, न द्वितीयोऽस्ति कश्चित्', यजुःसंहिता— 'अग्निर्वै देवानामवमो विष्णुः परमः', 'अग्निरग्रे प्रथमो देवतानां संयातानामुत्तमो विष्णुरासीत्' 'नारायण-

परं ब्रह्म तत्त्वं नारायणः परः । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः'
'तस्माद्विराडजायत, विराजो अधि पूरुषः' 'तमेवं विद्वानमृत इह भवति
नान्यः पन्था अयनाय विद्यते', महोपनिषत्— 'तस्य ध्यानान्तस्य नारायण-
स्य ललाटात्र्यक्षः शूलपाणिरजायत', ऋक्संहिता— 'विष्णोर्नु कं वीर्याणि
प्रवोचं यः पार्थिवानि विममे रजांसि । न ते विष्णो जायमानो न जातो देव-
महिम्नः परमन्तमाप । विष्णोः पदे परमे मध्व उत्सः, परो मात्रया तन्वा वृधान,
न ते महित्वमन्वश्नुवन्ति', तैत्तिरीयम्— 'नारायणं महाज्ञेयम्', सुबालोप-
निषत्— 'एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः',
रामतापिनी— 'रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मके । इति रामपदे-
नासौ परं ब्रह्माभिधीयते । अर्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रहः । श्रीरामस्य
मनुं काश्यां जजाप वृषभध्वजः । मन्वन्तरसहस्रैस्तु जपहोमार्चनादिभिः । ततः
प्रसन्नो भगवाञ्श्रीरामः प्राह शंकरम् । वृणीष्व यदभीष्टं ते दास्यामि परमेश्वर',
गोपालतापिनी— 'वृषभध्वजवन्द्याय पार्थसारथिरूपिणे', कृष्णोपनिषत्—'वने
वृन्दावने क्रीडन्गोपगोपीसुरैः सह । गोप्यो गाव ऋचस्तस्य यष्टिका कमलास-
नः । वंशस्तु भगवान्रुद्रः शृङ्गमिन्द्रसखोऽसुरः । गोकुलं वनवैकुण्ठं तापसास्तत्र
ते द्रुमाः । लोभक्रोधादयो दैत्याः कलिकालस्तिरस्कृतः । गोपरूपो हरिः
साक्षान्मायाविग्रहधारणः । रुद्रो येन कृतो वंशस्तस्य माया जगत्कथम् । शेष-
नागो भवेद्रामः कृष्णो ब्रह्मैव शाश्वतम्' इत्यादिनारायणोपनिषदुत्तरनारायण-
यजुर्वेदऋक्संहितामहोपनिषत्सुबालोपनिषद्रामतापिनीगोपालतापिन्यादिश्रुतिशतग -
तवाक्यैर्विरोधात् । भवदुदाहृतद्वित्राद्यर्थवादानामसदर्थवादत्वमकामेनाप्यङ्गीकर्त-
व्यम्, 'विरोधे गुणवादः स्यात्' इति न्यायात् । 'प्र, भूः, जय' इति पदाध्यय-
नस्य संप्रदायसिद्धत्वेन तद्विरोधेन भ्रस्ज्धातुघटितत्वं प्रभुर्जय इति पदस्याङ्गीकृत्य
हविःपाककर्मकर्तृपरत्वं प्रभुर्जयपदस्य स्वीकृत्य विष्णोः कर्माधीनैश्वर्यवर्णनस्या-
युक्तत्वात् मयि वर्च इत्यस्य विष्णुवाचकपदाघटितत्वेन विष्णुपरत्वस्यैव दूर-
निरस्तत्वात् । एतेन प्रजापतौ हर आसीदिति रुद्रोत्पत्तिबोधकतैत्तिरीयशाखावच-

नस्य 'तच्छ्रेयोरूपमत्यसृजत, तत्क्षत्त्रम्, यान्यत्र देवक्षेत्राणि, इन्द्रो वरुणः सोमः पर्जन्यो रुद्रो मृत्युरीशानः' इति बृहदारण्यकवचनस्य रुद्रे जीवत्वव्याप्यक्षत्त्रियवर्णत्वोत्पत्तिमत्त्वसमर्पकस्य 'विरूपाक्षोऽसि दन्ताञ्जिस्त्वं देवेषु ब्राह्मणः' इत्युपक्रमकस्य 'विरूपाक्षाय दन्ताञ्जये ब्रह्मणः पुत्राय' इति सामवेदीयप्रपदमन्त्रस्य जीवत्वव्याप्यब्राह्मणजातिमत्त्वं विरूपाक्षे प्रतिपादयतः अर्थवादत्वं स्यादित्युक्तमपास्तम् । अर्थवादलिङ्गस्यापि शब्दस्य 'ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः' 'नमस्ते रुद्र मन्यव उतोत इषवे नमः' इत्यादाविव नमःशब्दस्य अजात इत्येव कश्चिद्भीरुः प्रपद्यते 'रुद्र यत्ते मुखं दक्षिणं तेन मा पाहि' इत्यादाविव प्रार्थनालिङ्गस्य 'वायुर्वै क्षेपिष्ठा देवता' इत्यादाविव विधिसमभिव्याहारस्यादर्शनेनार्थवादत्वासंभवात् नमःशब्दस्यार्थवादलिङ्गत्वं यद्यपीयं स्तुतिस्तस्मै लोकात्मने नम इति वदद्भिः श्रीमच्छंकरभगवत्पादैः वैश्वानराधिकरणे स्पष्टीकृतम् । 'यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः । सूर्यश्चक्षुर्दिशः श्रोत्रम्' इति पादत्रयं प्राथमिकमनुदाहृत्य स्तुतित्वसूचनार्थं नमःशब्दघटित- 'तस्मै लोकात्मने नमः'- इति चतुर्थपादस्य गृहीतत्वात् । यत्तु 'विश्वाधिको रुद्रो महर्षिः' इति श्रुत्या विश्वशब्दवाच्यविष्णवपेक्षया रुद्रस्योत्कर्षसिद्धिरिति, तन्न; विश्वशब्दस्य शक्तिग्राहककोशे विष्णुनामस्वपरिगणनात् । सहस्त्रनामाध्याये योगेनैव विश्वशब्दस्य तास्मिञ्शिवरुद्रमहादेवादिशब्दादिवत्परिगणनात् विष्णोर्विश्वशब्दवाच्यत्वस्याभावे विष्णूत्कर्षस्य रुद्रे उक्तश्रुत्या वक्तुमशक्यत्वात्, अन्यथा 'रुद्रो वा एष यदग्निः' इति श्रुत्या रुद्रस्याग्नित्वोक्त्या 'अग्निर्वै देवानामवमो विष्णुः परमः' इति विष्णवपेक्षया अपकृष्टत्ववत्सर्वदेवापेक्षयापि रुद्रे प्रसक्तस्यापकर्षस्य को वा निवारकः स्यात् । 'विश्वाधि यो रुद्रो महर्षिः' इति सर्वैस्तैत्तिरीयकैः पठ्यते न त्वधिक इति । यत्तु चमके 'अग्निश्च मे विष्णुश्च मे' इत्यादिना अग्निविष्ण्वादीनां सर्वेषामपि फलत्वनिर्देशेन फलदाता रुद्र एवेति पर्यवस्यतीति, तन्न; 'अग्नाविष्णू सजोषसा' इति अग्निविष्णू चमकग्रन्थोपक्रमे प्रतिपाद्य अनन्तरम् 'वाजश्च मे प्रसवश्च

मे' इत्यादिना वाजादीनामिन्द्रविष्ण्वादिदेवादीनां भोग्यतया प्रार्थनं कृतम्। तादृशभोग्यप्रदः क इत्याकाङ्क्षायां रुद्राध्यायप्रतिपादितरुद्रापेक्षया चमकग्रन्थोपक्रमवाक्यप्रतिपादिताग्निविष्ण्वन्यतरस्य संनिहितत्वेन भोग्यप्रदत्वमित्यस्यैव न्याय्यत्वात्। अन्यतरमध्ये विष्णोरेव तन्न्याय्यम् 'अग्निरग्रे प्रथमो देवतानां संयातानामुत्तमो विष्णुरासीत्' 'अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरा वै सर्वा देवताः' इत्यग्न्यपेक्षया सर्वदेवतापेक्षया च विष्णोरेवोत्कर्षनिष्कर्षात्। न च 'विष्णुश्च मे' इति भोग्यकोटौ कथितस्य विष्णोः कथं तत्प्रदत्वमिति शङ्क्यम्; 'ब्रह्मविदाप्नोति परम्', 'सोऽश्नुते सर्वान्कामान्सह, ब्रह्मणा विपश्चिता' इति भोग्यकोटौ कथितस्य परमात्मनः 'अन्नादो वसुदानो विन्दते वसु य एवं वेद' 'एष एव साधु कर्म कारयति यमेभ्यो लोकेभ्य उन्निनीषति' 'एष ह्येवानन्दयाति' इत्यादिश्रुत्या भोग्यदातृत्वोक्तेः। न च भोग्यकोटौ चमके रुद्रस्याकथनात्तस्यैव भोग्यदातृत्वमिति शङ्क्यम्; विनायकसुब्रह्मण्यनिर्ऋत्यादीनां बहूनामत्राकथनेन तेषां भोग्यप्रदत्वमिति वक्तुं शक्यत्वात्। अस्मिंश्चमकग्रन्थे तेषामनुपस्थितत्वान्न तदिति चेत्; रुद्रस्यापि तर्हि तत्रानुपस्थितत्वान्न तदिति च निष्प्रत्यूहम्। तस्माच्चमकग्रन्थोपक्रमे विष्णोः प्रस्तुतत्वात्सर्वदेवोत्तमत्वेन फलदातृत्वसमर्थत्वाच्च स एव चमकोक्तफलानां दातेति समीचीनः पन्था इत्यलमतिविस्तरेण।

यः कश्चिज्जन्मादिसूत्रविरोधमप्यङ्गीकृत्य जगज्जन्मस्थितिलयानामेकैककारणत्वमपि परब्रह्मलक्षणमिति ब्रूयात् तं प्रति ब्रूयात् कथमेतावता तवेष्टसिद्धिरिति। रुद्रस्यापि ब्रह्मलक्षणसिद्धिरेवेष्टमिति चेत् तर्हि प्रदृश्यतां जगज्जन्मकारणत्वबोधकश्रुतिवाक्यम्। 'ध्यायीतेशानं प्रध्यायितव्यम्, इदं सर्वं ब्रह्मविष्णुरुद्रेन्द्राः संप्रसूयन्ते' इति श्रुतिवाक्यं रुद्रस्य जगज्जन्मकारणत्वप्रतिपादकमिति चेत्; तत्र वक्तव्यम्— उत्पत्तिमात्रं जगतः श्रूयते उत्पादकश्च न श्रूयते। प्रसूत्या उत्पादकः कश्चनाक्षेप्यः। स च किं श्रुतिसिद्धजगत्कारणत्ववानुतान्यः कश्चिदिति संदेहे, 'ध्यायीतेशानम्' इति संनिधानादी-

शानस्योपस्थितत्वेन ईशानादिति पञ्चम्यन्तं पदं परिकल्प्य रुद्र एव प्रसूतिकर्तेति कल्पना कार्या। सा च न संभवति, क्लृप्तकल्प्ययोर्मध्ये अपेक्षास्थले प्रत्यक्षश्रुतिक्लृप्तस्यैव विष्णोर्ग्रहणं युक्तम्, न तु कल्प्यस्य रुद्रस्य। विष्णोर्जगत्कारणत्वे 'तस्माद्विराडजायत, विराजो अधि पूरुषः' इति विराट्छब्दितहिरण्यगर्भादिकं प्रति सहस्रशीर्षत्वादिगुणविशिष्टविष्णुपरामर्शकतस्मादितिपञ्चम्यन्ततच्छब्देन कारणत्वसमर्पिका श्रुतिरेका। 'नारायणाद्ब्रह्मा जायते, नारायणाद्रुद्रो जायते, नारायणात्प्राणः मनः सर्वेन्द्रियाणि च, खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति पञ्चम्यन्तनारायणशब्देन तस्य जगज्जन्मकारणत्वप्रतिपादनपरा नारायणोपनिषच्छ्रुतिरपरा। 'एको ह वै नारायण आसीत्, न ब्रह्मा न च शंकरः, स मुनिर्भूत्वा समचिन्तयत्, तत एते व्यजायन्त, विश्वे हिरण्यगर्भविष्णुरुद्रेन्द्राः' इति वेदान्तकौस्तुभमध्वभाष्योदाहृतपैङ्गिश्रुतिरन्या। मध्वपाठे विष्णुपदं नास्ति, वेदान्तकौस्तुभकारपाठे तदस्तीत्येतावान्विशेषः। 'तस्य ध्यानान्तस्य ललाटात्त्र्यक्षः शूलपाणिरजायत' इति महोपनिषच्छ्रुतिरितरा। न ह्येवं कण्ठतः कारणत्वप्रतिपादनसमर्थपञ्चम्यन्तादिपदघटिता श्रुतिः रुद्रविषये क्वचिदृश्यते। 'अहमेकः प्रथममासम्' इत्यत्रापि पूर्वं सत्त्वात्कारणत्वमनुमेयम्। अतः परोक्षमेव तत्कारणत्वम्। प्रत्यक्षकारणत्वसंभवे न परोक्षं ग्राह्यम्। प्रत्यक्षं कर्मत्वमुत्सृज्य परोक्षं तत्कल्पयतो व्यर्थः प्रयासः स्यादिति श्रीमच्छंकरभगवत्पादैर्जिज्ञासाधिकरणे कथितत्वात्। 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्। ध्यात्वा मुनिर्गच्छति भूतयोनिम्' इति योनिशब्देनापि भूतकारणत्वं रुद्रस्य न सिध्यति। 'योनिष्ट इन्द्रसदने अकारि' 'रमणीयचरणा रमणीयां योनिमापद्यन्ते' इत्यादौ योनिशब्दस्य स्थानाद्यर्थान्तरेष्वपि बहुलं प्रयोगदर्शनेन कारणत्वमेव योनिशब्देनोच्यत इति प्रकरणोपपदद्दष्टान्तादिसमभिव्याहारनियामकं विना वक्तुमशक्यत्वात्। उक्तं हि श्रीमच्छंकरभगवत्पादैः 'योनिश्च हि गीयते' इति सूत्रभाष्ये— इतश्च ब्रह्म प्रकृतिः यत्कारणं ब्रह्म योनिरित्यपि पठ्यते वेदान्तेषु 'कर्तारमीशं पुरुषं ब्रह्मयोनिम्'

इति 'यद्भूतयोनिं परिपश्यन्ति धीराः' इति च। स्थानवचनोऽपि योनिशब्दो दृष्टः 'योनिष्ट इन्द्रसदने अकारि' इति वाक्यशेषात्। तत्र प्रकृतिवचनता परिगृह्यते 'यथोर्णनाभिः सृजते गृह्णते च' इत्येवंजातीयकादिति ग्रन्थेन। ननु पुरुषसूक्तस्य शिवपरत्वमुपबृंहणरूपशिवपुराणादिपर्यालोचनसिद्धम्। अतः 'तस्माद्विराडजायत' इति तदीयवाक्येन शिवस्यैव जगत्कारणत्वमुच्यत इति चेत्, न; 'इदं विष्णुः प्रक्षस्य विष्णुः प्रकाव्यमुशनं वाराहमन्त्यं पुरुषव्रते। एषा वैष्णवी नाम संहिता। एतां प्रयुञ्जन्विष्णुं प्रीणाति' इति सामविधानब्राह्मणश्रुत्या पुरुषसूक्तस्य विष्णुपरत्वविष्णुप्रीतिकरत्वविष्णुदेवताकत्वप्रतिपादनेन उक्तश्रुतिविरुद्धशैवोपबृंहणवचनानां विरोधाधिकरणन्यायेनाप्रमाणत्वात्। वैष्णवीत्युदाहृतश्रुतिगततद्धितः सास्य देवतेत्यर्थे वर्तमानः पुरुषसूक्तस्य विष्णुदेवताकत्वं कथयति। यत्तु पुरुषसूक्तगततृतीयऋचि 'उतामृतत्वस्येशानः' इति शिववाचकेशानश्रुतिसत्त्वेन शिवस्यैव मोक्षदातृत्वं तृतीयऋचोक्तमिति, तन्न; मुद्गलोपनिषदि— 'पुरुषसूक्तार्थनिर्णयं व्याख्यास्यामः, सहस्रशीर्षेत्यत्र सशब्दोऽनन्तवाचकः। अनन्तयोजनं प्राह दशाङ्गुलवचस्तथा। तस्य प्रथमया विष्णोर्देशतो व्याप्तिरीरिता। द्वितीयया चास्य विष्णोः कालतो व्याप्तिरुच्यते। विष्णोर्मोक्षप्रदत्वं च कथितं तु तृतीयया। एतावानिति मन्त्रेण वैभवं कथितं हरेः। एतेनैव च मन्त्रेण चतुर्व्यूहो विभाषितः। त्रिपादित्यनया प्रोक्तमनिरुद्धस्य वैभवम्। तस्माद्विराडित्यनया पादनारायणाद्धरेः। प्रकृतेः पुरुषस्यापि समुत्पत्तिः प्रदर्शिता। यत्पुरुषेणेत्यनया सृष्टियज्ञः समीरितः। सप्तास्यासन्परिधयः समिधश्च समीरिताः। तं यज्ञमिति मन्त्रेण सृष्टियज्ञः समीरितः॥ अनेन चैव मन्त्रेण मोक्षश्च समुदीरितः। तस्मादिति च मन्त्रेण जगत्सृष्टिः समीरिता। वेदाहमिति मन्त्राभ्यां वैभवं कथितं हरेः। यज्ञेनेत्युपसंहारः सृष्टेर्मोक्षस्य चेरितः। य एवमेतज्जानाति स हि मुक्तो भवेत्' इत्यत्र तृतीयमन्त्रेण ईशानपदघटितेन विष्णोरेव मोक्षप्रदत्वोक्तेः। ईशानशब्दस्य चात्र ससंबन्धिकत्वकथनेन शिवे रूढत्वासिद्धेः। ईशानशब्दस्य शानजन्तत्वे पाचकादिशब्दवत्केवलयौगिकत्वमेवे-

त्यविप्रतिपन्नम् । चानशन्तत्वेऽपि रूढत्वं न संभवति । 'रूढिशब्दप्रकारास्ता-च्छीलिकाः । न हि रूढिशब्दा गतिभिर्विशेष्यन्ते । न हि भवति देवदत्तः प्रदेवदत्तः' इति 'आढ्यसुभगस्थूल—' इति सूत्रमहाभाष्येण ताच्छीलिक-प्रत्ययान्तशब्दस्य रूढिशब्दसादृश्योक्त्या रूढिशब्दत्वाभावप्रतीतेः । न हि चन्द्रसदृशे मुखे चन्द्रत्वम् । अत्र कैयटः— रूढिशब्दप्रकारा इति । यथा रूढिशब्देषु क्रिया केवलं व्युत्पत्त्यर्थमाश्रीयते गच्छतीति गौरिति । तेन गमन-क्रियारहितोऽपि गौर्भवति । गोपिण्डाचान्योऽर्थो गमनविशिष्टोऽपि गौर्न भवति तथा ताच्छीलिका अपि क्रिया विषयं ताच्छील्यमुपादाय क्रियावेशा-भावेऽपि प्रयुज्यन्ते प्रकारग्रहणं सादृश्यार्थमिति भाष्यगतप्रकारपदं सादृश्यार्थ-तया व्याख्यातवान् । अत एवार्षमहाभाष्यवाक्यरूपशक्तिग्राहकोदाहृतव्याकरण-प्रमाणविरोधात् अर्वाचीननामकोशेषु ईशानशब्दस्य शिवनामसु परिगणनं प्रामा-दिकमित्यवगन्तव्यम् । एतेन प्रमिताधिकरणे अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य' इत्यत्राङ्गुष्ठप्रमितस्य परमात्मत्वे ईशान-शब्दस्य वाचकश्रुतित्वेन 'शब्दादेव प्रमितः' इति सूत्रे शब्दशब्देन निर्दे-शात् ईशानशब्दस्य परमात्मनि शक्तिरावश्यिकी । अत एव श्रीमच्छंकर-भगवत्पादभाष्ये ईशान इति परमेश्वरो गम्यते इति वाचकश्रुतित्वोक्तिः संगच्छते । 'ईशानो भूतभव्यस्य' इति भूतभव्यानिरूपितेशितृत्वलिङ्गस्यैव सिद्धान्तहेतुत्वे अङ्गुष्ठमात्रत्वरूपपरिच्छिन्नपरिमाणरूपजीवलिङ्गाधीनजीवपूर्वपक्षस्य लिङ्गेन सि-द्धान्तकरणमयुक्तं स्यात् । सूत्रे शब्दशब्दनिर्देशोऽप्ययुक्तः स्यात् । लिङ्गा-दित्येव सूत्रे निर्देशश्च स्यादिति शिवतत्त्वविवेककाराभिप्रायः परास्तः । शब्द-शब्दस्य श्रुतिवाक्यसाधारण्येन श्रुतिरूपरूढशब्द इव वाक्यरूपशब्देऽपि 'शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्' इत्यादिसूत्रेषु प्रयोगदर्शनात् । न वाचकशब्द एव सूत्रे निर्दिष्ट इत्यत्र एतत्प्रमाणं भवति वाक्याधीनलिङ्गस्याप्य-पहतपाप्मत्वादेः 'अन्तस्तद्धर्मोपदेशात्' इत्यत्र 'स एव सर्वेभ्यः पाप्मभ्य उदितः' इति शब्दस्य उपदेशादिति शब्देन उक्तलिङ्गसमर्पकस्य ग्रहणेन

गृहीतत्वात् । अत्रापि भूतभव्यनिरूपितेशितृत्वरूपपरमात्मलिङ्गस्य 'ईशानो भूतभव्यस्य' इति शब्दग्रहणद्वारा शब्दशब्देन ग्रहीतुं शक्यत्वात् 'वालाग्रशत-भागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः' इति श्रुत्या जीव-स्याणुपरिमाणत्वावगमेन अङ्गुष्ठपरिमितत्वस्य जीवेऽप्यौपाधिकस्यैव वक्तव्य-तया परमात्मन्यपि तस्यौपाधिकस्य संभवेन अङ्गुष्ठपरिमितत्वस्य पूर्वपक्ष-लिङ्गस्य जीवेश्वरसाधारणत्वेन परमात्मासाधारणभूतभव्येशानत्वप्रबललिङ्गेनान्य-थाकरणस्य उचितत्वेन लिङ्गेन सिद्धान्तकरणे बाधकाभावात् । अत एव श्रीमच्छंकरभगवत्पादैः सिद्धान्तभाष्योपक्रमे 'अङ्गुष्ठप्रमितः परमेश्वरो भवितु-मर्हति, कुतः, शब्दात् 'ईशानो भूतभव्यस्य' इति । न हि निरङ्कुशं भूतभव्येशितृत्वं परमेश्वरादन्यत्र संभवति' इति ग्रन्थेन । लिङ्गग्राहि भूतभव्यस्येशान इति वाक्यं सूत्रस्थशब्दशब्देन गृहीत्वा सिद्धान्तः प्रद-र्शितः । अभिधानश्रुतेरेव ईशान इति परमेश्वरो गम्यत इत्युत्तरवाक्यस्य उपक्रमवाक्यानुरोधेन ईशान इत्यस्य भूतभव्यस्येशान इत्येतत्परत्वम् अभिधान-श्रुतेरित्यस्य बोधकशब्दादित्यर्थत्वं चाश्रित्यार्थो वर्णनीयः; अन्यथा सिद्धान्तो-पक्रमभाष्यविरोधापत्तेः । सिद्धान्तोपक्रमभाष्यस्य निगमनमेतदुत्तरवाक्यम् । अत एव निगमनभाष्ये ईशानशब्दस्य परमात्मरूढत्वाभावसिद्ध्यर्थं गम्यत इत्युक्तम्, न त्वभिधीयत इति । तस्मादीशानशब्दः केवलयौगिक एवेति श्रीमच्छंकरभग-वत्पादानामभिप्रायः । यत्तु श्वेताश्वतरोपनिषदि 'विश्वाधिको रुद्रो महर्षिः हिरण्यगर्भं जनयामास' इति वाक्यं सर्वकारणहिरण्यगर्भकारणत्वं रुद्रे प्रतिपा-दयतीति, तन्न; 'प्रजापतौ हर आसीत्, विरूपाक्षाय ब्रह्मणः पुत्राय नमः' इत्यादिबहुश्रुतिषु हिरण्यगर्भस्यैव रुद्रकारणत्वोक्त्या बहनुग्रहन्यायेन एकस्य 'रुद्रो महर्षिर्हिरण्यगर्भं जनयामास' इति वाक्यस्यौपचारिकत्वाश्रयणेन आवि-र्भावाधिष्ठानत्वपरतया नेयत्वात् । शरभोपनिषदि यदपि रुद्रस्य जगज्जन्मादि-त्रयकारणत्वबोधकं वचनम्, तदपि न रुद्रस्य ब्रह्मलक्षणमर्पयितुमलम्, तदुपनि-षदि तत्तद्वाक्यावसानेषु 'तस्मै रुद्राय नमो अस्तु' इति स्तुतिलिङ्गनमःपदप-

टितवाक्यस्यावृत्तिश्रवणेन तद्वाक्यस्यार्थवादत्वेन स्वार्थे जगज्जन्मादिकारणत्वे तात्पर्यासंभवात् । प्रत्युत तदुपनिषदि 'एको विष्णुर्महद्भूतम्' इत्यादिना 'चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च । हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ।' इत्यनेन विष्णोः परत्वं स्पष्टमेवोक्तम् । तस्माच्छ्रुतिषु जगत्कारणत्वरूपब्रह्मलिङ्गं रुद्रादौ क्वाप्यनुक्तमिति विष्णुरेव वेदसिद्धान्तरीत्या परं ब्रह्मेति सिद्धम् । एतेन सर्वज्ञत्वसर्वशक्तित्वसर्वान्तर्यामित्वादेः कृत्स्नजगत्कारणत्वरूपब्रह्मलक्षणव्याप्यतया व्यापकं निवर्तमानं व्याप्यमपि निवर्तयतीति न्यायेन रुद्रादिषु सर्वज्ञत्वादिनिवृत्त्यवगमः । क्वचिद्रुद्रादिषु सर्वज्ञत्वादिवचनं चेत् औपचारिकमेव तदित्यलमतिविस्तरेण ।

यत्तु 'तमो वा इदमेकमेकमासीत्' इत्यारभ्य तत्परेणेरितं विषमत्वं प्रयातीत्येतद्वै रजसो रूपम्' इत्यादिना तमोधिष्ठातुः परस्य संकल्पादविद्याख्यस्य तमसो गुणविभागं निरूप्य 'तस्य प्रोक्ता अग्र्यास्तनवो अथ यो हास्य राजसोंशोऽसौ ब्रह्मा अथ यो हास्य तामसोंशोऽसौ रुद्रः अथ यो हास्य सात्त्विकोंशोऽसौ विष्णुः स वा एष एकः' इति तमोधिष्ठातुः परस्य रजोगुणाद्युपहिता अंशभेदा ब्रह्मादय इति प्रतिपादनेन तेभ्यः परं तत्त्वान्तरं तमोधिष्ठातृ परं ब्रह्म तुरीयमिति स्पष्टीकृतम् । तादृशस्य तुरीयस्य ब्रह्मणः 'शिवमद्वैतं चतुर्थं मन्यन्ते' इति माण्डूक्यश्रुत्या शिवरूपत्वं सिध्यति । 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वा मुनिर्गच्छति भूतयोनिम्' इति कैवल्योपनिषच्छ्रुत्या उमासहायविग्रहस्य भूतयोनेः 'स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् । स एव विष्णुः स प्राणः' इत्यादिना ब्रह्मविष्णुरुद्रत्रिमूर्तिविभूतिकत्वेन तुरीयत्वोक्त्या उमासहायविग्रहवत्त्वसिद्धिरिति शिव एव तुरीयं ब्रह्मेत्युक्तम्, तन्न; तुरीयसिद्धावपि तुरीयस्य विष्ण्वपेक्षया भिन्नत्वं न सिध्यति । किं तु विष्णुरूपत्वमेव सिध्यति, न तु विधिशिवरूपत्वमपि । मैत्रायणीयोपनिषदि 'तस्य प्रोक्ता अग्र्यास्तनवः' इत्यादिनोक्तस्य तमोधिष्ठातुस्तुरीयस्य 'अथ यो हास्य सात्त्विकोंशोऽसौ विष्णुः, स वा एष

एकः' इत्यनेन तच्छब्दोपात्तस्य तमोधिष्ठातुस्तुरीयस्य एषइतिपदोपात्तस्य सात्त्विकविष्णोरेक इति पदेनैकत्वोक्तेः। कैवल्योपनिषदि 'ध्यात्वा मुनिर्गच्छति भूतयोनिम्' इत्युक्तस्य भूतयोनेस्तुरीयत्वेनाभिमतस्य 'स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्, स एव विष्णुः स प्राणः' इति त्रिमूर्तिविभूतिकत्वोक्त्यवसरे 'स एव विष्णुः' इति तच्छब्देन भूतयोनिं परामृश्य विष्णुशब्देन च विष्णुं परामृश्य तयोः परस्परान्यत्वस्यैवकारेण व्यवच्छेदकरणात् तुरीयस्य भूतयोनेर्विष्णुरूपत्वावश्यिकत्वात्। 'स ब्रह्मा स शिवः' इत्यत्र एवकारादर्शनेन विधिशिवयोस्तुरीयविभूतित्वमात्रम्, न तु तुरीयरूपत्वमिति स्पष्टमवगमात्। अथर्वशिखायाम् 'यास्य द्वितीया मात्रा सा विष्णुदैवत्या विद्युन्मती यास्यावसाने चतुर्थ्यर्धमात्रा पुरुषदैवत्या विद्युन्मती' इति द्वितीयार्धमात्रयोर्विद्युन्मतीत्वोक्त्या ऐक्यप्रत्यभिज्ञानेन तद्देवतयोर्द्वितीयविष्णुतुरीयपुरुषयोरैक्यावगमेन तुरीयस्य विष्णुरूपत्वावगमात्। ब्रह्मदैवत्यप्रथममात्रारुद्रदैवत्यतृतीयमात्रयोस्तुरीयार्धमात्रया ऐक्यप्रत्यभिज्ञापकलिङ्गस्य कस्याप्यदर्शनेन विधिशिवयोस्तुरीयरूपत्वासिद्धेः। न च 'शिवमद्वैतं चतुर्थं मन्यन्ते' इति माण्डूक्यवाक्येन तुरीयस्य शिवरूपत्वसिद्धिरित्यपि शङ्क्यम्; माण्डूक्य एव 'जागरितस्थानो वैश्वानरः प्रथमः पादः, स्वप्नस्थानस्तैजसो द्वितीयः पादः, सुषुप्तिस्थानः प्राज्ञस्तृतीयः पादः' इति जाग्रदवस्थाविशिष्टविश्वसंज्ञकजीवस्वप्नावस्थाविशिष्टतैजससंज्ञिकजीवसुषुप्त्यवस्थाविशिष्टप्राज्ञसंज्ञिकजीवान् एकत्वेऽप्यवस्थया पृथग्भूतान्निर्दिश्यानन्तरम् 'प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते' इति अवस्थात्रयविनिर्मुक्तस्य चतुर्थस्य मुक्त्यवस्थस्य जीवस्य शिवमिति मङ्गलरूपत्वोक्त्या भवदभिमततुरीये ब्रह्मविष्णुरुद्रापेक्षया तुरीयत्वस्य वक्तव्यत्वेन तत्र तदनुक्त्या भवदभिमततुरीयस्य शिवत्वासिद्धेः। न च 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्। ध्यात्वा मुनिर्गच्छति भूतयोनिम्' इति तुरीयस्य भूतयोनेरुमासहायत्वमुक्तमिति शङ्क्यम्; उमासहायध्यानात्तुरीयभूतयोनिप्राप्त्युक्तावपि भूतयोनेरुमासहायरूपत्वासंभवस्य पूर्वमेवोक्तेः। ननु मास्तु शिवस्य तुरीयत्वम्, भवतु विष्णोरेव

तत् । कथमेकस्य विष्णुचेतनस्य द्वितीयत्वतुरीयत्वे संभवत इति चेत्, शृणु— 'सह पत्न्या विशालाक्ष्या नारायणमुपागमत्' इति श्रीरामायणीयायोध्याकाण्डवचनप्रामाण्यात् 'अजायमानो बहुधा विजायते, तस्य धीराः परिजानन्ति योनिम्' इति श्रुतिसनाथादेकस्यैव नारायणचेतनस्य द्विभुजदिव्यमङ्गलविग्रहविशिष्टरामरूपेण सेवकत्वं तदन्यदिव्यमङ्गलविग्रहविशिष्टनारायणरूपेण सेव्यत्वं चाश्रीयते । तथा सहस्रशीर्षत्वादिविशिष्टेन केनचिद्दिव्यमङ्गलविग्रहविशिष्टरूपेण तुरीयत्वम् । 'सहस्रशीर्षं देवम्' इति सहस्रशीर्षत्वादिशरीरविशिष्टनारायणं प्रस्तुत्य 'स ब्रह्मा स शिवः' इत्यादिना ब्रह्मरुद्रादिविभूतिकत्वाम्नानेन ब्रह्मरुद्रादिविभूतिकतुरीयनारायणस्य सहस्रशीर्षत्वादिविशिष्टदिव्यमङ्गलविग्रहप्रतीतेः; चक्रपाणित्वादिदिव्यमङ्गलविग्रहविशिष्टत्वेन रूपेण तस्यैव द्वितीयत्वम् । द्वितीयतया विष्णुशब्देन तत्र तत्र निर्दिष्टस्य विष्णोः सामवेदीयषड्विंशब्राह्मणे 'विष्णवे चक्रपाणये स्वाहा' इति चक्रपाणित्वोक्तेः विग्रहभेदेन द्वितीयत्वतुरीयत्वयोरविरोधः । यत्तु केनचित्कौलिना 'या तस्य पार्श्वगा बाला सा पार्वत्यंशजो हरिः' इत्यादिपुराणवचनमुदाहृत्य विष्णोः पार्वत्यंशत्वमुक्तम्, तन्न; दुर्गासूक्ते दुर्गां प्रस्तुत्य 'वैष्णवीं लोक इह मादयन्ताम्' इति विष्णोः प्राधान्यं तन्निरूपिताप्राधान्यं च कथयन्त्या तद्धितपदप्रत्ययघटितवैष्णवीति श्रुत्या विरुद्धतया विष्णोः पार्वत्यंशत्वपार्वत्यंशजत्वादिबोधकपुराणादिवचनानां विरोधाधिकरणन्यायेनाप्रमाणत्वात् । ऋक्संहितायां लक्ष्मीसूक्ते 'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्' इति लक्ष्मीवचनसरूपश्रुतिवचसा उग्रशब्दितस्य पार्वतीपते रुद्रस्य विष्णुपत्नीरूपलक्ष्मीकृतत्वस्य तादृशलक्ष्म्यधीनरुद्रपदकत्वस्य वा कथने सति पार्वतीपतिजनकलक्ष्म्याः पत्यौ विष्णौ कथं पार्वतीजन्यत्वं तदंशत्वं वा संभवेत्?

श्वेताश्वतरोपनिषद्विलासः ।

यन्मूलकारणमबुध्यत सृष्टिवाक्यै-
स्तद्ब्रह्मविष्णुशिवमूर्तिषु किंस्वरूपम् ।

एवं विमृश्य पुरुषेति पदस्य शक्तेः
श्वेताश्वशब्दघटिता श्रुतिराह विष्णुम् ॥

इदं तु बोध्यम्— श्वेताश्वतरोपनिषदि 'ब्रह्मवादिनो वदन्ति, किं कारणं ब्रह्म कुतः स्म जाता जीवाम केन क्व च संप्रतिष्ठिताः केनाधिष्ठिताः सुखेतरेषु वर्तामहे, ब्रह्मविदो व्यवस्था कालस्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्, संयोग एषां न त्वात्मभावादात्माप्यनीशः सुखदुःखहेतोः' इत्युपक्रमोऽस्ति। तस्यार्थः— 'सदेव सोम्येदमग्र आसीत्' 'यतो वा इमानि भूतानि जायन्ते' 'तद्विजिज्ञासस्व तद्ब्रह्म' इत्यादिश्रुतिभिरवगतं जगज्जन्मादिकारणं ब्रह्म किंरूपमिति श्रुत्यन्तरसिद्धं जगत्कारणं ब्रह्म सिद्धवत्कृत्य हरिहरविरिञ्चादीनां मध्ये कस्मिन्देवताविशेषे पर्यवस्यतीत्येका विचिकित्सा। वयं ब्रह्मविदोऽपि कुतः केन जनिता इति द्वितीया। केन वयं जीवनं प्राप्ता इति तृतीया। क्व च कस्मिन्प्रलयकाले वयं संप्रतिष्ठिता लीना इति चतुर्थी। सुखतद्भिन्नेषु केन वयं वर्तामह इति पञ्चमी। एतेषु विचिकित्सितविषयेषु ब्रह्मविद्व्यवस्था कीदृशीति षष्ठी। कालस्वभाव इत्यादि चिन्त्यमित्यन्तं प्रथमविचिकित्सायाः वेदपुरुषेणोत्तरं दत्तम्। प्रथमविचिकित्सायाः प्रधानत्वेन तदुत्तरे क्रियमाणे सर्वविचिकित्साः प्रत्युत्तरिता भवन्तीति वेदपुरुषाभिप्रायः। कालः प्रसिद्धः। स्वभावो वस्तुशक्तिः। नियतिः पुण्यपापसंचयः। यदृच्छा आगन्तुकप्राप्तिः। भूतान्याकाशादीनि। इत्येतत्सर्वं योनिः पुरुष इति जगत्कारणपुरुष इति चिन्त्यं ज्ञेयम्, उपादानपुरुषात्मकत्वात्। उपादेयस्य कालादेः तादृशपुरुषत्वेन ज्ञेयत्वमिति प्रत्युत्तरवाक्यस्वारसिकार्थः। योनिः पुरुष इत्यत्र इतिशब्दाभावे यत्तूक्तं तच्चिन्त्यमित्यत्रैव चिन्त्यशब्दस्योपेक्षणीयमित्यर्थः स्यात्। अत्र पुरुषशब्दोत्तरं चिन्त्यशब्दात्प्रागितिशब्दस्तु वर्तते। तेनोक्त एवार्थः स्वारसिकः। उक्तप्रत्युत्तरवाक्येन किं देवतारूपमिति विचिकित्सितं कारणं ब्रह्म पुरुषदेवतारूपमिति निर्णीतमिति स्पष्टम्। किंचिदत्राशङ्क्य श्रुतिरेव परिहरति। एषां कालादीनां संयोगः परस्परसंबन्धः न योनिः आत्मनो जीवस्य सुखदुःखार्थ-

मेवोक्तसंयोगस्य भावात् अन्यतो भवनात् आत्मापि जीवोऽपि अनीशः योनित्वविषयेऽसमर्थः । सुखदुःखान्वयाद्धेतोरिति । अस्मिन्नुपक्रमग्रन्थे किं देवतारूपं जगत्कारणं ब्रह्मेति विमृष्टजगत्कारणब्रह्मत्वस्य योनिः पुरुष इति चिन्त्यम् इत्यंशेन प्रत्युत्तरवाक्यगतेन पुरुषशब्दितदेवतायां विश्रान्तिरिति सिद्ध्या विष्णुरेव जगत्कारणं ब्रह्मेति सिद्धम् । 'तस्यैकत्वं महत्त्वं हि स एकः पुरुषः स्मृतः' इति महाभारतमोक्षधर्मनारायणीयवचनेन विष्णौ पुरुषशब्दशक्तिग्राहकेण पुरुषपदस्य विष्णावेव शक्त्यवगमात् । न ह्येवं शिवादिषु पुरुषशब्दशक्तिग्राहकं वचनमस्तीति शङ्क्यम्; पुराणस्य वैदिकप्रस्थानात्प्रस्थानान्तरत्वेन वैदिकानामनादेयत्वस्य गायत्रीतत्त्वार्थविलासे सप्रमाणमुपपादितत्वात् । श्रुत्यादिषु विधिशिवादौ पुरुषशब्दस्य प्रयोगमात्रं तु क्वचित्क्वचिद्विरलतया दृश्यते । तावता तु न शक्तिसिद्धिः । तर्हि गङ्गापदस्यापि तीरे शक्तिसिद्ध्यापत्तिः; उक्तनारायणीयवचने 'स एकः पुरुषः स्मृतः' इत्येवकारार्थकैकशब्देन विष्णुभिन्ने पुरुषपदशक्तिनिराकरणविरोधापत्तेश्च । न विष्णुभिन्ने पुरुषपदस्य शक्तिः, किं तु निरूढलक्षणैव जीवत्वेन जीवबोधने । शिवत्वादिना शिवबोधने तु सांप्रतिकी । न च तर्हि पुरुषपदस्य विष्णौ शक्त्यङ्गीकारे बर्हिराज्याधिकरणविरोधः; वचनविरोधे न्यायाप्रवृत्तेः, 'न हि वचनविरोधे न्यायः प्रवर्तते' इति न्यायात् । तस्मादुक्तश्वेताश्वतरोपनिषद्रीत्या विष्णुरेव जगत्कारणब्रह्मत्वाश्रयव्यक्तिविशेष इति निष्प्रत्यूहम् । किं चास्यामुपनिषदि प्रथमाध्यायान्ते तद्ब्रह्मोपनिषत्परं तद्ब्रह्मोपनिषत्परमिति द्विरुक्त्या विचिकित्सितजगत्कारणब्रह्मत्वाश्रयदेवताविशेषनिर्धारणसमाप्त्यवगमात् एतदुपनिषद्गता उपरितनाध्यायाः प्रथमाध्यायोक्तजगत्कारणब्रह्मरूपविष्णुसिद्धान्ताविरोधेन नेया इत्यविप्रतिपन्नम् । अत उत्तराध्यायगता रुद्रादिशब्दा अपि जगत्कारणे श्रूयमाणा योगेन विष्णुपरतया योजनीयाः; अन्यथोपक्रमस्थप्रथमाध्यायविरोधापत्तेः । न च प्रथमाध्याये जगत्कारणब्रह्मत्वविश्रान्तिपर्यवसानभूमिदेवताविशेषनिर्धारणार्थं विधिशिवादिवाचकानां शब्दानां मध्ये कश्चिदपि शब्दोऽस्ति प्रत्युत पुरुषशब्दोक्तस्य विष्णोरेव

वाचकौ 'अनन्तश्चात्मा विश्वरूपः' इति मन्त्रे अनन्तविश्वरूपशब्दावपि श्रुतौ। 'अनन्तो हरिशेषयोः' इति कोशात् 'विश्वरूपो मुरारिः' इति कोशाच्च तौ शब्दौ विष्णुशक्तौ। किं च उपरितनाध्यायेषु 'क्षरं प्रधानम्' इति मन्त्रे शिवस्य नियम्यकोटिप्रवेशः कृतः। ततः परम् 'ब्रह्म परम्' इति मन्त्रे परब्रह्मभिन्नत्वं च निर्दिष्टम्। कथं नियम्यस्य परब्रह्मभिन्नस्य शिवस्य सृष्टजगत्कारणब्रह्मत्वं संभवति।

---

सामोर्पट्टूर्ग्रामः ख्यातः काञ्च्याः पश्चाद्देशे रम्ये।
तद्ग्रामस्था विप्रा वत्सास्त्वौदीच्याख्यास्तेषां मध्ये॥ १॥
रघुनाथाख्यभूदेवस्त्वासीच्छास्त्रार्थतत्त्ववित्।
पुत्रस्तस्य चतुस्तन्त्री रामभद्राख्यपण्डितः॥ २॥
तस्य पुत्रद्वयं ख्यातं तत्रैकोऽय्याख्यभूसुरः।
स तु विद्वान्सर्वशास्त्रे तुलजीन्द्रपुरेऽवसत्॥ ३॥
तस्य पुत्रत्रयं जातं मध्यमोऽण्णाख्यपण्डितः।
यस्य शिष्यप्रशिष्यैस्तु भूषितं मण्डलं भुवः॥ ४॥
तस्य पुत्रो हरेरंशः साक्षान्नारायणाह्वयः।
अश्वत्थपूर्वपदकः प्रसिद्धः पृथिवीतले॥ ५॥
पितुः सकाशात्संलब्धसर्वशास्त्रार्थतत्त्ववित्।
स्वपितुर्निकटे शास्त्रमद्वैतं ज्ञातुमागतात्॥ ६॥
अहोबिलाख्यविदुषो महाभाष्यं गृहीतवान्।
स्वयंप्रकाशप्रमुखा यतिवर्या अपि स्वयम्॥ ७॥
यस्मादधीतवेदान्तत्रितयाः ख्यातपण्डिताः।
माध्वा रामानुजीयाश्च श्रीशांकरमतानुगाः॥ ८॥
स्वस्वसिद्धान्तसंसिद्धग्रन्थतत्त्वबुभुत्सया।
यस्य च्छात्रत्वमापद्य पाण्डित्ये प्रथिता बभुः॥ ९॥

पातञ्जले महाभाष्ये गादाधर्यां च वार्त्तिके ।
भट्टपादकृते भाष्ये शबरस्वामिना कृते ॥ १० ॥
खण्डदेवकृतौ भाट्टदीपिकायां च कौस्तुभे ।
ब्रह्मानन्दसरस्वत्या रचिता चन्द्रिकाभिधा ॥ ११ ॥
कृतिस्तस्यां मध्वतन्त्रचन्द्रिकावनमालयोः ।
वेदान्ताचार्यरचिता शतदूषणिसंज्ञिका ॥ १२ ॥
कृतिस्तस्यां दोड्डयार्यरचिते चण्डमारुते ।
तत्तन्मतस्थभाष्येषु तथा विद्यान्तरेषु च ॥ १३ ॥
ज्ञानं यस्य महान्तोऽपि शास्त्रिणस्त्र्यम्बकादयः ।
ज्ञात्वाश्चर्यं मुदं चैव प्राप्ता इति हि शुश्रुमः ॥ १४ ॥
सीतापतेः पादपद्मे यन्मनोलिः सदा स्थितः ।
इति श्रुतं मया तस्य पुत्रः श्रीरामशंकरः ॥ १५ ॥
धर्मशास्त्रे तथा पूर्वतन्त्रे बुद्धिमवाप सः ।
तस्य पुत्रत्रयं तत्र ज्येष्ठो नारायणाह्वयः ॥ १६ ॥
श्रुतिस्मृतितदर्थेषु सम्यक्छ्रद्धासमन्वितः ।
कोदण्डपूर्वकैर्वर्णैर्नाम्ना रामेति विश्रुतः ॥ १७ ॥
कनिष्ठो मध्यमस्तत्र रामसुब्बिवति विश्रुतः ।
शिवरामार्यसंज्ञानां देशिकानां महात्मनाम् ॥ १८ ॥
प्रसादात्सर्वशास्त्रज्ञो रामदास्यरसानुभूः ।
तेनायं रचितो ग्रन्थो लोकानुग्रहकाम्यया ॥ १९ ॥

इति विष्णुद्वेषकरमहाशैवमतमर्दनं संपूर्णम् ।

## शुद्धिसूचिका

| पृष्ठम्. | पङ्क्तिः. | शुद्धपाठः |
|---|---|---|
| ६. | ३. | इत्युपक्रम्य |
| ११. | २९. | मन्त्रस्यायमर्थः |
| १४. | २०. | विष्णोर्यज्ञशब्दस्य |
| १६. | १३. | सर्वदेवकर्तृक० |
| ,, | १६. | मनुष्येषु |
| २३. | २४. | ०विष्णवर्चक० |
| २४. | १८. | दर्शनात् |
| २९. | ११. | ०वचनाभ्यां |
| २६. | २१. | ०ऽर्जुनेन |
| ४६. | १९. | कस्याचिच्छ्रुति० |